# VEDASTUTI

OCCURRING IN THE

## TENTH SKANDHA OF ŚRĪBHĀGAVATA

With the Commentaries Shrīdharī & Shrīdharīprakāsh
of Kashīnāthopādhyāya.

---

EDITED

BY

WĀSUDEV LAXMAN ŚĀSTRĪ PANŚIKAR.

Second Edition

PUBLISHED BY

PĀNDURANG JĀWAJĪ,

Proprietor of the 'Nirṇaya Sāgar' Press,

BOMBAY.

1[illegible]0.

*Price 10 Annas.*

श्रीमत्-

भागवतदशमोत्तरार्धगतसप्ताशीत्यध्यायरूपा

# वेदस्तुतिः ।

लोकेत्र्यवायेतिमीमांसा-जन्माद्यस्येतिश्लोकश्च ।
श्रीधरीव्याख्यायुता-काशीनाथोपाध्यायप्रणीत-
श्रीधरीप्रकाशव्याख्यासंवलिता ।

तावद्गर्जन्ति शास्त्राणि जम्बुका विपिने यथा ।
न गर्जति महासत्त्वो यावद्वेदान्तकेसरी ॥

गोमान्तकान्तर्गतपेडणेनिवासिपणशीकरोपाह्वविद्वद्वर-
लक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा संस्कृता ।

द्वितीयावृत्तिः ।

सेयं
मुम्बय्यां
पाण्डुरङ्ग जावजी,
इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालयेऽङ्कयित्वा
प्राकाश्यं नीता ।

शाके १८५२, सनाब्द १९३०

मूल्यं १० आणकाः ।

# अथ प्रास्ताविकम् ।



श्रीमद्भागवततोषणीसारारम्भे श्रीमत्काशीनाथोपाध्यायैरुपोद्घातत्वेन संकलित प्रबन्ध एवात्र प्रस्तावे नितान्त विद्वन्मनोविनोदायालमिति स एवादौ यथावदुल्लिख्यते—

## पुराणेतिहासादीना श्रीमद्भागवतस्य चाभ्यर्हितत्वख्यापनाय ।

अथ स्वत प्रमाणभूतश्रुतिव्याख्याप्रणयनादर परित्यज्य पदवाक्यप्रमाणपारावारपारीणा विद्वद्धुरिणा श्रीधरस्वामिप्रमुखा पौरुषेयपुराणव्याख्यानेषु किमिति प्रववृतिरे, पौरुषेयाणा भ्रमप्रमादनिर्बन्धादिदुरुपदोषसभवापादिताप्रामाण्यशङ्काकलङ्कितत्वात् । दृश्यते च शवैष्णवादिपुराणेषु शिवविष्णवाद्युत्कर्षप्रतिपादननिर्बन्ध । अतएव परस्पर विरोधेन बाधादप्यप्रामाण्यम् । श्रुतिप्रतिपादितयागादिधर्मादिभ्यो भगवच्चरणपरिचरणधर्मादिश्रैष्ठ्यप्रतिपादनेन श्रुतिविरोधाच्च, इत्यमेव मन्वादिस्मृतिविरोधाच्चेति न शङ्कनीयम्, पुराणाना वेदत्वात्, नि श्वसितन्यायेन ऋगादिसमकक्षतयेश्वरादुत्पन्नत्वात्, तथाच 'शास्त्रयोनित्वात्' इत्यधिकरणे भाष्योदाहृता बृहदारण्यकश्रुति — 'अस्य महतो भूतस्य नि श्वसितमेवैतद्यदृग्वेदो यजुर्वेद सामवेदोऽथर्वाङ्गिरस इतिहास पुराण विद्या उपनिषद ' इत्यादि । एतेनापौरुषेयत्व व्याख्यातम् ।

प्रमाणेनार्थमवगत्य रचितत्वाभावो हि अपौरुषेयत्व, सजातीयोच्चारणानपेक्षोच्चारणविषयत्व वा ? तत्रेश्वररचितत्व तावदुक्तश्रुतिसिद्धम् । नह्यनाद्युतज्ञानशक्ति सर्वज्ञ ईश्वर प्रमाणेनार्थमवगत्य पुराणानि रचितवानिति वक्तु युक्तम् । नवा प्रतिकल्प पुराणानुपूर्वीभेदे मानमस्तीत्युक्तलक्षणानुपपत्ति ।

नचैवमपि ऋक्सामादाविवात्र वेदत्वेन श्रुतौ व्यवहाराभावान्न वेदत्वमिति शङ्क्यम् । 'ऋग्वेद भगवोऽध्येमि यजुर्वेद सामवेदमथर्वण चतुर्थमितिहासपुराण च पञ्चम वेदाना वेद' इत्यादिना छान्दोग्ये सप्तमाध्याये बहुशस्तद्दर्शनात्, तथा इतिहासपुराणयोश्च—'इतिहासपुराण च पञ्चम वेदमीश्वर ' इति, 'इतिहासपुराणानि पञ्चमो वेद उच्यते' इति, 'वेदानध्यापयामास महाभारतपञ्चमान् । कार्ष्ण च पञ्चम वेद यन्महाभारत स्मृतम् ॥' इत्यादौ । स्कान्दवैयासिकेत्यादिसमाख्या कर्तृस्मरणानि च शाकलतैत्तिरीयेत्यादिवत्प्रवचनापेक्षाणि ।

यत्तु पौरुषेयत्वानुमाने स्मर्यमाणकर्तृकत्वमुपाधिरिति, तत्र कर्तृपद प्रवक्तृभिन्नपरम् । अन्यथा तैत्तिरीयादिसमाख्याद्वारा कर्तृस्मरणेन साधनव्याप्यापत्त । 'चक्रे सात्वतसहिता' इत्यादौ श्रीव्यासादिकर्तृस्मरणमपि पूर्वसिद्धपुराणविस्तरस्य सुखग्रहणाय सक्षेपपूर्वकप्रवचनपरम् । अन्यथेश्वरादुत्पन्नत्वप्रतिपादकश्रुतिविरोधापत्ते । पुरा व्यासादिकृतप्रवचनात्पूर्वमेवाभवदित्यर्थकपुराण

चित्॥' इति। स्कान्देच-'वेदवन्निश्चलं मन्ये पुराणार्थं द्विजोत्तम। बिभेत्यल्पश्रुताद्वेदो मामयं चालयिष्यति॥ इतिहासपुराणैस्तु निश्चलोऽयं कृतः पुरा। यन्न दृष्टं हि वेदेषु दृष्टं तत्स्मृतिषु द्विजाः॥ उभयत्र न दृष्टं हि तत्पुराणैः प्रगीयते॥' इत्यादि। नच 'वेदार्थमुपबृंहयेत्' इत्युक्त्या वेदार्थव्याख्यानभूतत्वं पुराणानामापद्यत इति तन्मूलकत्वेव प्रामाण्यं न वेदत्वेनेति वाच्यम्। मन्त्रब्राह्मणयोर्वेदत्वेऽपि व्याख्येयव्याख्यानभावदर्शनात् तत्र मन्त्रापेक्षया व्याख्यानभूतब्राह्मणस्यैव प्राबल्याच्च, व्याकरणादौ व्याख्येयसूत्रापेक्षया भाष्यवार्तिकग्रन्थयोरेव प्रामाण्यदर्शनाच्च। एतेन स्मृतिविरोधपरिहारोऽपि व्याख्यातः। चतुर्वेदार्थव्याख्यानत्वेन साम्ये समुच्चयविकल्पसंभवात् पौरुषेयत्वेन दौर्बल्ये पञ्चमवेदत्वेन बाधसंभवात्, सर्वत्राप्युत्कर्षापकर्षवर्णनस्य प्ररोचनतात्पर्यकत्वान्न क्वापि विरोधगन्धोऽपीत्यपि सुगमः पन्थाः। यच्च 'श्रुतिमूलकतया प्रामाण्यं पुराणानां न स्वतः' इति कैश्चिदुक्तं तत् स्मृतित्वाभिमान्येकदेशिमतोपपादनमात्रं न तत्त्वकथनमुक्तविरोधादिति दिक्। तस्मात् ऋगादिवेदस्य संप्रति दुष्पारत्वाद् दुरधिगमार्थत्वाच्च तदर्थनिर्णायकपुराणेतिहासात्मकवेदशब्द एव विचारणीयः। दृश्यन्ते च श्रीमच्छंकरपादशंकराचार्यस्वामिचरणप्रभृतयः सनत्सुजातीयादिव्याख्यानप्रवणा इत्यलम्।

## श्रीमद्भागवतस्य श्रैष्ठ्यवर्णनम्।

तत्रापि श्रीमद्भागवतमेव श्रेष्ठतमं सर्ववेदार्थसूत्रलक्षणां मन्त्रराजवरां गायत्रीमधिकृत्य प्रवृत्तत्वात्। तथाच मात्स्ये पुराणदानप्रस्तावे-'यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः। वृत्रासुरवधोपेतं तद्भागवतमिष्यते॥ लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम्। प्रौष्ठपद्यां पूर्णमास्यां स याति परमां गतिं॥' इत्यादि। एवमग्निपुराणे पुराणान्तरे च ब्राह्मादिवाराहान्तानां वैशाख्याद्याः पौर्णमासी दानकालाः। तत्र क्रमप्राप्ता श्रीभागवतस्य प्रौष्ठपदी। हेमसिंहसमन्वितमिति हेमसिंहासनारूढमित्यर्थः, सर्वपुराणचक्रवर्तित्वादिति टीकाकृतः। वस्तुतस्तु नात्र शब्दप्रमाणके पूर्वेऽर्थे हेतुचिन्तया मनः खेदनीयम्। माक्षवैष्णवादिषु जलधेनु घृतधेनु-समन्वितत्वे हेत्वभावात्कथंचित्कल्पनस्याप्रामाणिकत्वात्। एतेन श्रीमद्भागवतस्य वैष्णवपुराणत्वेन तद्दाने एकादश्यादिकालो गरुडादिवाहनयोगश्च युक्तो वा, पौर्णमासीसिंहादियोग इति वा कुमत्यूहः परास्तः। शैवलिङ्गादौ शिवरात्र्यादिकालस्यादर्शनात्, नन्द्यादिवाहनयोगस्य चाप्यदर्शनाच्च।

स्यादेतत्। लक्षणमनुक्त्वैव भागवतं दद्यादित्येतावत्येवोक्तेऽपि भगवता प्रोक्तं भागवतं इदं प्रतिपादकं भागवतमिति समाख्ययैव भागवतपदार्थले-

णंयः स्यादेवेति कुतः श्रीभागवतस्य लक्षणोक्तिपूर्वकमत्र वाक्ये तद्विधिरिति। अत्रोच्यते—भागवतं दद्यादित्युक्तेन समाख्यामात्रेण विशेषनिर्णयः। 'एवं चकार भगवान्व्यासः कृपणवत्सल.' इत्युक्त्या भगवद्व्यासप्रणीतपुराणमात्रस्य भागवतत्वापातात्। श्रीविष्णुशिवयोर्द्वयोरपि भगवत्त्वेन तत्प्रतिपादकविष्णुपुराणशिवपुराणादीनामपि भागवतत्वापत्तात्त्व तत्तद्दानस्य वाक्यान्तरेण विधानात्परिशेषानिर्णयाच्च क्रेशाद्वैष्णवभागवतशब्दयोरेवमपि परस्परातिप्रसङ्गापरिहाराच्च लक्षणोक्तिपूर्वकं दानविधिरिति। तथाच यथोक्तलक्षणलक्षितं श्रीशुकपरीक्षित्संवादरूपं द्वादशस्कन्धात्मकं श्रीभागवतमिति ज्ञानेन शैववैष्णवपुराणादावतिप्रसङ्गशङ्केति। प्रथमस्कन्धे जन्माद्यिपद्यव्याख्योपसंहारे "एतेन भागवतं नामान्यदिति न शङ्कनीयं" इति श्रीधरस्वामिपादोक्तेरन्यच्छिवपुराणविष्णुपुराणादिकमेव भागवतं नामेति न शङ्क्यमित्ययमेवाशयो विद्वद्भिर्विभावनीयः। संवत्सरप्रदीपधृतस्कान्दवचने च वैष्णवानां भागवतविचारावश्यकत्वमवगम्यते। 'शतशोऽथ सहस्रैश्च किमन्यैः शास्त्रसंग्रहैः। न यस्य विद्यते गेहे शास्त्रं भागवतं कलौ॥ कथं स वैष्णवो ज्ञेयः शास्त्रं भागवतं कलौ। गृहे न तिष्ठते यस्य स विप्रः श्वपचाधमः॥' इति। एवमन्यान्यपि वाक्यानि तत्तत्पुराणतोऽवगन्तव्यानीति सर्वमतिरमणीयम्।

एतावतैवोपोद्घातेन श्रीमद्भागवतगुणगरिमा व्याख्यातप्रायः। अधुना प्रस्तुतमधिकृत्य किंचिदिव लेखनीं व्यापारयामः। इयंहि वेदस्तुतिर्नाम्नैव स्वस्य श्रुत्यात्मकतां ज्ञापयति। तेनास्या इतरविषयेभ्योऽतिगाम्भीर्यं स्फुटं प्रतीयते। पदवाक्यप्रमाणपारावारपारीणैः श्रीधरस्वामिभिर्व्याख्यानावसरे यावच्छक्यं स्फुटीकृताऽप्यस्याः श्रुतिस्तुतेः, 'लोकेव्यवाया–' इत्येकादशस्य पञ्चमाध्यायगतैकादशश्लोकस्य, जन्माद्यस्येति भागवतारम्भश्लोकस्य चात्यन्तं दुरूहत्वात्तेषां व्याख्यापि दुरवबोधैवासीदिति सर्वेषां व्युत्पित्सूनां सौलभ्येनार्थावगमाय परमकारुणिकैस्त्रोपर्णीसार-धर्मसिन्ध्वाद्याकरप्रणयनेन विश्वविश्रुतसद्गुणगणैः श्रीकाशीनाथोपाध्यायैः श्रीधरीव्याख्यायाः सविस्तरं पदपदार्थावबोधकं व्याख्यान्तरं प्राणायि। तच्च कतिचन वत्सरेभ्यः पूर्वं कैश्चिन्महोदयैः शिलायन्त्रेऽङ्कनेन प्रकाशितमपि नातिशुद्धं संप्रति जिघृक्षूणामलभ्यं चासीदिति यावच्छक्यं सम्यक्संशोध्य प्रकाशितं विदुषां प्रमोदाय स्यादित्याशासे—

विद्वदेकान्तवशंवदः पणशीकरोपाह्वयो
वासुदेवशर्मा।



# वेदस्तुतिः ।

काशीनाथोपाध्यायव्याख्योपबृंहितश्रीधरीव्याख्यायुता ।
( श्रीमद्भागवतदशमोत्तरार्धगतः ८७ अध्यायः । )

परीक्षिदुवाच—ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ।
कथं चरन्ति श्रुतयः साक्षात्सदसतः परे ॥ १ ॥

श्रीधरस्वामिव्याख्या ।

श्रीः ॥ सप्ताशीतितमे नारायणनारदवादतः ।
वेदैः स्तुतिर्गुणालम्बा निर्गुणावधि वर्ण्यते ॥ १ ॥
वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि ।
यस्यास्ते हृदये संवित्तं नृसिंहमहं भजे ॥ २ ॥
संप्रदायविशुद्ध्यर्थं स्वीयनिर्बन्धयन्त्रितः ।
श्रुतिस्तुतिमितव्याख्यां करिष्यामि यथामति ॥ ३ ॥
श्रीमद्भागवतं पूर्वैः सारतः संनिवेशितम् ।
मया तु तदुपस्पृष्टमुच्छिष्टमुपचीयते ॥ ४ ॥

श्रीधरव्याख्यागूढार्थप्रकाशिका ।

श्रीपाण्डुरङ्गाय नमः ॥ श्रीपाण्डुरङ्गमानम्य पितरौ च गुरून्गुणान् । श्रीश्रीधरीयटीकाया व्याख्यां कुर्वे श्रुतिस्तुतेः ॥ १ ॥ गुणालम्बेति । गुणानामालम्ब आश्रयणं यस्यां सा, निर्गुणमवधिः पर्यवसानं बोध्यम् । यत्र यथा स्यात्तथा या वेदकर्तृका स्तुतिः सा अत्र वर्ण्यत इत्यर्थः ॥ १ ॥ २ ॥ स्वीयानां टीकानां निर्बन्धेन स्वीकारः ॥ ३ ॥ श्रीमदिति । पूर्वटीकाकारैः संनिवेशितं व्याप्तपादं तैरस्पृष्टं किंचिद्व्याख्यानं विशेषतस्त्ववशिष्टं विस्तार्यत इत्यर्थः । केचित्सार-

त्तिर्न संभवतीत्याह—साक्षात्कथं चरन्तीति । तत्र हेतुः—अनिर्देश्ये इति । अनिर्देश्यत्वेऽपि हेतुं वदन् गुणवृत्तिं निराकरोति—निर्गुणे गुणवृत्तय इति । गुणैर्वर्तमाना अपि निर्गुणे कथं चरन्तीत्यर्थः । निर्गुणत्वे च हेतुं वदन् लक्षणां योगं च निराकरोति—सदसतः

---

अथवा प्रकृतिप्रत्ययार्थयोर्योगेन योगः । इत्थं योगचातुर्विध्यम् । तत्र पङ्कजमित्यत्र रूढित्वरया पङ्केति-जेति-पदाभ्यां प्रतिपादितयोः कर्दमजनिपदार्थयोः कर्दमोपादानकजनिकर्तृत्वरूपेण योगात्पङ्कजपदं तामरसे यौगिकम् । एवं महादेव इत्यत्र महत्पद-देवपदाभ्यां रूढ्या प्रतिपादितयोर्महत्त्वदेवत्वयोः शिवे योगान्महादेवपदं शिवे यौगिकम् । एवमुत्तमपुरुषराजपुरुषादिपदेषूह्यम् । औपगवः पाचक इत्यत्र प्रकृतिप्रत्ययार्थयोर्योगेन योगः । औपगवे उपगोरपत्यमित्यपत्यार्थे अण्प्रत्ययस्तद्धितः । पाचके पचधातोः कृत्प्रत्ययो ण्वुल् । उपगुसंबन्ध्यपत्यत्वपाककर्तृत्वरूपेण प्रकृतिप्रत्ययार्थयोर्योगेन यौगिकत्वम् । आदिपदेन लक्षणागौणीवृत्तिभ्यां बोधितपदार्थयोर्योगोदाहरणद्वयं गृह्यते । तत्र नीलरक्तो घट इति लक्षणाप्रतिपादितपदार्थयोर्योगो न्यायमते नीलादिपदानां द्रव्ये लाक्षणिकत्वात् । तथाच नीलश्चासौ रक्तश्चेति विग्रहे समासे च सति लक्षणया नीलरक्तगुणविशिष्टद्रव्यपदार्थयोर्नीलविशिष्टाभिन्नं रक्तविशिष्टमित्येवं कर्मधारयसमासेन योगोक्तेर्लक्षणाबोधितपदार्थयोर्योगेन योग इत्यस्य संभवत्येतदुदाहरणम् । शुक्लनीलादिशब्दा गुणे तद्वति च रूढा इति मते तु खड्गशूलो हन्तीत्युदाहरणम् । तत्र यष्टीः प्रवेशयेत्यादौ यष्टिधरे लक्षणावत् खड्गशूलपदयोस्तद्धारके लक्षणा । तथाच खड्गश्चासौ शूलश्चेति विग्रहे कर्मधारयेण खड्गधराभिन्नः शूलधरो हन्तीत्यर्थेन लक्षणाबोधितपदार्थयोर्योगोदाहरणम् । सिंहाभिन्नो माणवक इति गौणीबोधितपदार्थयोर्योगे । अत्र हि सिंहश्चासावभिश्चेति विग्रहे कर्मधारयसमासेन सिंहवच्छौर्यादिगुणवदभिन्नोऽग्निवत्तेजस्वित्वादिगुणविशिष्ट इत्यर्थाद्गौणीवृत्तिप्रतिपादितपदार्थयोर्योगेन योग इत्यस्योदाहरणमिदम् । क्वचित्प्रतिपादितपदार्थयोः प्रकृतिप्रत्ययार्थयोर्योगेनेति चापदरहितः पाठः सोऽतिक्लिष्टत्वादुपेक्षितः । अनिर्देश्यत्वेऽपि हेतुं वदन्निति । ननु निर्गुणत्वस्यानिर्देश्यत्वे हेतुत्वमनुपपन्नं, निर्गुणानामपि गुणकर्मादीनां आत्मादिना निर्देशप्रसिद्धेरिति चेन्न । निर्गुणपदस्य निर्धर्मकत्वार्थकत्वात्, गुणो गौण उपसर्जन इत्यर्थात्, धर्म्यधीनत्वेन धर्माणामुपसर्जनत्वस्य स्पष्टत्वात् । ननु सदसत पर इत्ययं निर्गुणपदोक्त-

श्रीशुक उवाच—बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः ।
मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥ २ ॥

---

परे इति । कार्यकारणाभ्यां परस्मिन्नसङ्गे केनचिदपि संबन्धाभावान्न लक्षणायोगवृत्ती संभवत इत्यर्थः । एवं पदार्थत्वायोगादपदार्थस्य च *वाक्यार्थत्वायोगान्न श्रुतिगोचरत्वं ब्रह्मण इत्यभिप्रायः* ॥ १ ॥

उत्तरमाह—बुद्धीन्द्रियेति। बुद्ध्यादीनुपाधीन् जनानामनुशायिनां जीवानां मात्राद्यर्थं प्रभुरीश्वरोऽसृजत् । मीयन्त इति मात्रा विषयास्तदर्थम् । भवार्थं भवो जन्मलक्षणं कर्म तत्प्रभृति कर्मकरणार्थमित्यर्थः । आत्मने लोकान्तरगामिने । आत्मनस्तत्तल्लोकभोगायेत्यर्थः । अकल्पनाय अकल्पनानिवृत्तये । मुक्तय इत्यर्थः । अर्थधर्मकाममोक्षार्थमिति क्रमेण पदचतुष्टयस्यार्थः । जनानामिति वदन् जीवार्थमीश्वरस्य सृष्ट्यादिषु प्रवृत्तिरिति दर्शयति । प्रभुरिति ईश्वरस्योपाधि-

---

निर्धर्मकत्वे लक्षणायोगनिरासे चोभयत्रापि कथं हेतुरित्याशङ्कायामाह—**केनचिदपि संबन्धाभावादिति**। सधर्मकत्वं धर्मैः संबन्धे स्यात् । केनचिदपि संबन्धाभावे कथं सधर्मकत्वम् । किंच सर्वे धर्माः कार्यरूपा एव वेदान्तसिद्धान्ते । तार्किकमते तु सर्वे पदार्थाः कारणरूपा एव । 'पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृत'मित्युक्तेः पारिमाण्डल्यमानस्याकारणरूपत्वेऽपि ब्रह्मणो विभुत्वेन तदसंभवात् । तथाच कार्यकारणभिन्नधर्माभावात् कार्यकारणसंबन्धाभावे सधर्मकत्वं न संभवतीति । किंच *लक्षणायाः शक्यसंबन्धविषयत्वात्, योगवृत्तेरपि पदार्थयोगप्रकृति*प्रत्ययार्थयोगविषयत्वात्, योगस्य संबन्धापरपर्यायत्वाच्च लक्षणायोगवृत्ती संभवत इति भाव. । **न श्रुतिगोचरत्वमिति**। श्रुतिगोचरत्वाभावे श्रुत्येकसमधिगम्ये ब्रह्मणि मनःप्रवृत्तिरपि न स्यादिति ब्रह्मज्ञानसिद्धिरिति पूर्वपक्षाभिप्रायः । अतएव 'निर्गुणेऽपि मनश्चरे'दित्युपसंहारे मन प्रवृत्त्युपपादनं संगच्छत इति ध्येयम् ॥१॥

**बुद्धीन्द्रियेति** । ननु श्रुतीनां ब्रह्मपरत्वे आक्षिप्ते प्रभुर्जीवानां चतुर्वर्गार्थं बुद्ध्यादीनसृजदिति समाधानमयुक्तमित्याशङ्क्य प्रभ्वादिपदैः सूचितानां लक्षणैकय-

---

१ पारिमाण्डल्यमणुपरिमाण कारणन्च तद्भिन्नानामित्यर्थः ।

पूर्वाध्यायान्ते 'एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान् । उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात्' इत्यत्र सन्मार्गं सतां स्वतःप्रमाणभूतानामप्रामाण्यकारणरहितानां वेदानां मार्गं ब्रह्मपरत्वमुपदिश्य भगवानगादित्युक्तं, तत्र वेदानां ब्रह्मपरत्वमघटमानं मन्वानः पृच्छति—ब्रह्मन्निति । तत्र तावन्मुख्या–लक्षणा–गुण–भेदेन त्रिधा शब्दप्रवृत्तिः । मुख्यापि रूढि–योगभेदेन द्विधा । रूढिश्च स्वरूपेण जात्या गुणेन वा निर्देशार्हे वस्तुनि संज्ञासंज्ञिसंकेतेन प्रवर्तते यथा डित्थः गौः शुक्ल इति । लक्षणा च तेनैव संकेतेनाभिहितार्थ-

---

भोजिनामुच्छिष्टं पामरैः संगृह्यत इत्यर्थान्तरं स्वगर्वाभावद्योतकं स्पष्टम् ॥ ४ ॥ इति श्रीधरकृतश्लोकचतुष्टयव्याख्या ॥ ॥ अथ परीक्षित्प्रश्नादीकाव्याख्या । स्वतःप्रमाणभूतानां वेदानामिति सतामित्यस्यार्थः । वेदानां स्वतःप्रामाण्ये हेतुः—**अप्रामाण्यकारणरहितानामिति** । पौरुषवाक्येष्वप्रामाण्यकारणं भ्रमप्रमादादिपुरुषदोषाः, अपौरुषेये वेदे तदसंभवात्स्वतःप्रामाण्यं, पौरुषवाक्यानां मूलप्रमाणाधीनं परतःप्रामाण्यमिति भावः । शब्दानां केनापि प्रकारेण ब्रह्मणि प्रवृत्तिर्न संभवतीति वक्तुं शब्दप्रवृत्तिप्रकारान्परिगणयति—**तत्र तावदिति** । शब्दस्य प्रवृत्तिर्बोधनानुकूलव्यापारः संज्ञासंज्ञिनोः शब्दार्थयोः संकेतः अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपस्तेन रूढिः प्रवर्तते । गोशुक्लादिपदे ईश्वरसंकेतः डित्थाद्याधुनिकसंज्ञास्वपि स्पष्ट एव । देवदत्तादीनां संज्ञाकर्तॄणामिच्छाया ईश्वरेच्छाधीनत्वादीश्वरेच्छारूपत्वम् । स्वरूपेण निर्देशार्हवस्तुवाचकं रूढशब्दमुदाहरति—**डित्थ इति** । अयं संज्ञाशब्दः कस्यचित्पिण्डमात्रस्य वाचको नतु जातिगुणविशिष्टस्य । एवमेकव्यक्तिवाचकाः कालाकाशादिशब्दा अपि स्वरूपरूढोदाहरणम् । व्यक्त्यैक्येन कालत्वादिजातेरभावात्कालाकाशादिपदेन गुणाभिधानासंभवाच्च जातिगुणरूढत्वानुपपत्तेः । **गौरिति** । जातिरूढोऽयं गोपदस्य गोत्वजातिविशिष्टवाचकत्वात् । **शुक्ल इति** । अत्र पटादि विशेष्यमध्याहार्यम् । तेन गुणविशिष्टद्रव्यवाचकत्वाद्गुणरूढत्वम् । यत्तु 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वती'त्याद्यनुसारेण 'पटे शुक्लो गुण' इति प्रयोगस्तत्र शुक्लपदस्य

संबन्धिनी यथा गङ्गायां घोष इति । गौणी चाभिहितार्थलक्षितगुणयुक्ते तत्सदृशे यथा सिंहो देवदत्त इति । यथाहुः—'अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेष्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणते' ति । योगवृत्तिस्तु एतत्त्रिविधवृत्तिप्रतिपादितपदार्थयोः प्रकृतिप्रत्ययार्थयोर्वा योगेन, यथा पङ्कजं औपगवः पाचक इत्यादि । तत्र तावद्रूढाणि रूढिवृ-

---

जातिरूढत्वमेव । तत्र शुक्लादिपदस्य रूपत्वव्याप्यशुक्लत्वाद्यवान्तरजातिविशिष्टवस्तुवाचकत्वात् । योगाख्यमुख्याभेदस्य लक्षणादिज्ञानसापेक्षत्वाल्लक्षणागुणवृत्ती तावल्लक्षयति—**लक्षणा चेत्यादि** । तेनैव सङ्केतेन संज्ञासंज्ञिसंकेतेन स्वरूपादित्रिधानिर्देशार्हवस्तुविषयकेण प्रतिपादितार्थसंबन्धिनी प्रवृत्तिर्लक्षणा । गङ्गायां घोष इत्यत्र गङ्गापदेन 'गङ्गा विष्णुपदी जह्नुतनये' ति कोशाज्जाह्नवीसंज्ञात्वात्स्वरूपरूढेन प्रतिपादितजाह्नवीसप्रवाहसंबन्धि तीरं बोध्यते । नद्यां घोषो गम्भीरायां घोष इत्यादौ जातिगुणरूढिभ्यामभिहितार्थसंबन्धिनि तीरे लक्षणोह्या । **अभिहितार्थलक्षितेति** । त्रिविधसंकेतेनोक्तो यः सिंहादिपशुविशेषरूपोऽर्थस्तत्र लक्षिता ये शौर्यक्रौर्यादिगुणास्तद्युक्ते देवदत्तादौ तत्सदृशे सिंहादिसदृशे प्रवृत्तिर्गौणीत्यर्थः । तद्गुणयुक्ते तत्सादृश्यनियमात्पुनस्तत्सदृश इत्युक्तिः । क्वचिद्वाय्वाकाशादिकारणगुणानां शब्दादीनां वायुतेजआदिकार्येषु योगेऽपि तत्सादृश्याप्रतीतेः । सिंहो देवदत्त इत्यत्र जातिरूढ्याभिहितार्थलक्षितगुणयोगः । आकाश आत्मेत्यत्र स्वरूपरूढेनाकाशलक्षितसर्वगतत्वासङ्गत्वादिगुणयोगः । पिकशब्दो मधुरः काकशब्दः कटुरित्यादौ मधुरादिशब्दैर्गुणरूढैर्लक्षितप्रियत्वाप्रियत्वादिगुणयोग इत्युभयत्र गौणीत्वमूह्यम् । **अभिधेयेति** । अभिधेयं गङ्गादिपदवाच्यं प्रवाहादि तेन अविनाभूते नित्यसंबद्धे तीरादौ गङ्गादिपदस्य या प्रवृत्तिः सा लक्षणेष्यते । इष्टेत्यर्थः । सिंहादिरूपे अभिधेये लक्ष्यमाणा ये गुणाः शौर्यादयस्तैर्योगात्संबन्धात् या प्रवृत्तिस्तत्र वृत्तेर्गौणता इष्टा । तत्र गौणीवृत्तिरित्यर्थः । मुख्याया द्वितीयं भेदं योगमाह—**योगेति** । प्रकृतिप्रत्ययार्थयोर्वा योगेनेति चापदघटितपाठः । यथाच रूढि-लक्षणा-गौणीति त्रितयान्यतमवृत्तिप्रतिपादितयोः पदार्थयोर्योगेन योगः ।

---

१ मस 'मानान्तरविरोधेतु मुख्यार्थस्यापरिग्रहे' इत्यादिः ।

त्तिर्न संभवतीत्याह—साक्षात्कथं चरन्तीति। तत्र हेतुः—अनिर्देश्ये इति। अनिर्देश्यत्वेऽपि हेतुं वदन् गुणवृत्तिं निराकरोति—निर्गुणे गुणवृत्तय इति। गुणैर्वर्तमाना अपि निर्गुणे कथं चरन्तीत्यर्थः। निर्गुणत्वे च हेतुं वदन् लक्षणां योगं च निराकरोति—सदसतः

---

ऽथवा प्रकृतिप्रत्ययार्थयोर्योगेन योगः। इत्थं योगचातुर्विध्यम्। तत्र पङ्कजमित्यत्र रूढिवृत्त्या पङ्केति-जेति-पदाभ्यां प्रतिपादितयोः कर्दमजनिपदार्थयोः कर्दमोपादानकजनिकर्तृस्वरूपेण योगात्पङ्कजपदं तामरसे यौगिकम्। एवं महादेव इत्यत्र महत्पद-देवपदाभ्यां रूढ्या प्रतिपादितयोर्महत्त्वदेवत्वयोः शिवे योगान्महादेवपदं शिवे यौगिकम्। एवमुत्तमपुरुषराजपुरुषादिपदेषूह्यम्। औपगवः पाचक इत्यत्र प्रकृतिप्रत्ययार्थयोर्योगेन योगः। औपगवे उपगोरपत्यमित्यपत्यार्थे अण्प्रत्ययस्य स्थितः। पाचके पचधातोः कृत्प्रत्ययो ण्वुल्। उपगुसंबन्ध्यपत्यत्वपाककर्तृत्वरूपेण प्रकृतिप्रत्ययार्थयोर्योगेन यौगिकत्वम्। आदिपदेन लक्षणागौणीवृत्तिभ्यां बोधितपदार्थयोर्योगोदाहरणद्वयं गृह्यते। तत्र नीलरक्तो घट इति लक्षणाप्रतिपादितपदार्थयोर्योगो न्यायमते नीलादिपदानां द्रव्ये लाक्षणिकत्वात्। तथाच नीलश्चासौ रक्तश्चेति विग्रहे समासे च सति लक्षणया नीलरक्तगुणविशिष्टद्रव्यपदार्थयोर्नीलविशिष्टाभिन्नं रक्तविशिष्टमित्येवं कर्मधारयसमासेन योगो लक्षणाबोधितपदार्थयोर्योगेन योग इत्यस्य संभवत्येतदुदाहरणम्। शुक्लनीलादिशब्दा गुणे तद्वति च रूढा इति मते तु खड्गशूलो हन्तीत्युदाहरणम्। तत्र यष्टीः प्रवेशयेत्यादौ यष्टिधरे लक्षणावत् खड्गशूलपदयोस्तद्धारके लक्षणा। तथाच खड्गश्चासौ शूलश्चेति विग्रहे कर्मधारयेण खड्गधराभिन्नः शूलधरो हन्तीत्यर्थेन लक्षणाबोधितपदार्थयोर्योगोदाहरणम्। सिंहाभिर्माणवक इति गौणीबोधितपदार्थयोर्योगे। अत्र हि सिंहश्चासावभिश्चेति विग्रहे कर्मधारयसमासेन सिंहवच्छौर्यादिगुणवदभिन्नोऽग्निवत्तेजस्वित्वादिगुणविशिष्ट इत्यर्थाद्गौणीवृत्तिप्रतिपादितपदार्थयोर्योगेन योग इत्यस्योदाहरणमिदम्। क्वचित्प्रतिपादितपदार्थयोः प्रकृतिप्रत्ययार्थयोर्योगेनेति वापदरहितः पाठः सोऽतिक्लिष्टत्वादुपेक्षितः। अनिर्देश्यत्वेऽपि हेतुं वदन्निति। ननु निर्गुणत्वस्यानिर्देश्यत्वे हेतुत्वमनुपपन्नं, निर्गुणानामपि गुणकर्मादीनां जात्यादिना निर्देशप्रसिद्धेरिति चेन्न। निर्गुणपदस्य निर्धर्मकत्वार्थकत्वात्, गुणो गौण उपसर्जन इत्यर्थात्, धर्म्यधीनत्वेन धर्माणामुपसर्जनत्वस्य स्पष्टत्वात्। ननु सदसत पर इत्ययं निर्गुणपदोक्त-

श्रीशुक उवाच—बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः ।
मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥ २ ॥

---

**परे इति** । कार्यकारणाभ्यां परस्मिन्नसङ्गे केनचिदपि संबन्धाभावान्न लक्षणायोगवृत्ती संभवत इत्यर्थः । एवं पदार्थत्वायोगादपदार्थस्य च वाक्यार्थत्वायोगान्न श्रुतिगोचरत्वं ब्रह्मण इत्यभिप्रायः ॥ १ ॥

उत्तरमाह—**बुद्धीन्द्रियेति** । बुद्ध्यादीनुपाधीन् जनानामनुशायिनां जीवानां मात्राद्यर्थं प्रभुरीश्वरोऽसृजत् । मीयन्त इति मात्रा विषयास्तदर्थम् । भवार्थं भवो जन्मलक्षणं कर्म तत्प्रभृति कर्मकरणार्थमित्यर्थः । आत्मने लोकान्तरगामिने । आत्मनस्तत्तल्लोकभोगायेत्यर्थः । अकल्पनाय अकल्पनानिवृत्तये । मुक्तय इत्यर्थः । अर्थधर्मकाममोक्षार्थमिति क्रमेण पदचतुष्टयस्यार्थः । जनानामिति वदन् जीवार्थमीश्वरस्य सृष्ट्यादिषु प्रवृत्तिरिति दर्शयति । प्रभुरिति ईश्वरस्योपाधि-

---

निर्धर्मकत्वे लक्षणायोगनिरासे चोभयत्रापि कथं हेतुरित्याशङ्कायामाह—**केनचिदपि संबन्धाभावादिति** । सधर्मकत्वं धर्मैः संबन्धे स्यात् । केनचिदपि संबन्धाभावे कथं सधर्मकत्वम् । किंच सर्वे धर्माः कार्यरूपा एव वेदान्तसिद्धान्ते । तार्किकमते तु सर्वे पदार्थाः कारणरूपा एव । 'पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृत'मित्युक्तेः पारिमाण्डल्यमानस्याकारणरूपत्वेऽपि ब्रह्मणो विभुत्वेन तदसंभवात् । तथाच कार्यकारणभिन्नधर्माभावात् कार्यकारणसंबन्धाभावे सधर्मकत्वं न संभवतीति । किंच लक्षणायाः शक्यसंबन्धविषयत्वात्, योगवृत्तेरपि पदार्थयोगप्रकृतिप्रत्ययार्थयोगविषयत्वात्, योगस्य संबन्धापरपर्यायत्वाच्च लक्षणायोगवृत्ती संभवत इति भावः । **न श्रुतिगोचरत्वमिति** । श्रुतिगोचरत्वाभावे श्रुत्येकप्रमधिगम्ये ब्रह्मणि मनःप्रवृत्तिरपि न स्यादिति ब्रह्मज्ञानसिद्धिरिति पूर्वपक्षाभिप्रायः । अतएव 'निर्गुणेऽपि मनश्चरे'दित्युपसंहारे मनःप्रवृत्त्युपपादनं संगच्छत इति ध्येयम् ॥१॥

**बुद्धीन्द्रियेति** । ननु श्रुतीनां ब्रह्मपरत्वे आक्षिप्ते प्रभुर्जीवानां चतुर्वर्गार्थं बुद्ध्यादीनसृजदिति समाधानमयुक्तमित्याशङ्क्य प्रभ्वादिपदैः सूचिताना लक्षणैक्य-

---

१ पारिमाण्डल्यमणुपरिमाणं कारणत्ववद्भिन्नानामित्यर्थः ।

वश्यताभावेन नित्यमुक्ततां दर्शयति । **अयमभिप्रायः—**सगुणमेव गुणैरनभिभूतं सर्वज्ञं सर्वशक्तिं सर्वेश्वरं सर्वनियन्तारं सर्वोपास्यं सर्वकर्मफलप्रदातारं समस्तकल्याणगुणनिलयं सच्चिदानन्दं भगवन्तं श्रुतयः प्रतिपादयन्ति । 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः' 'सर्वस्य वशी सर्वस्येशानः' 'यः पृथिव्यां तिष्ठन् पृथिव्या आन्तरः' 'सोऽकामयत बहु स्याम्' 'स ऐक्षत' 'तत्तेजोऽसृजत'

---

निषेधोपासनाकर्मपराणां पञ्चविधश्रुतीनां ब्रह्मपरत्वप्रकारमाह—**अयमभिप्राय इति** । यद्यपि मुख्यागौण्यौ वृत्ती न संभवतस्तथापि लक्षणा संभवेत् । कार्यकारणात्मकजगतो ब्रह्मणि संयोगसमवायादिसंबन्धाभावेऽपि तत्राध्यस्तत्वेनाध्यासिकसंबन्धसंभवात् । अध्यस्तत्वाध्यासिकसंबन्धायनङ्गीकारे बुध्यादिजगत्स्रष्टृत्वादिकमेव न संभवेदित्ययमुत्तराभिप्राय इत्यर्थः । तत्रादौ लक्षणश्रुतीनां तात्पर्यमाह **—सगुणमेवेति** । सर्वज्ञत्वादिधर्मविशिष्टमेव भगवन्तं मुख्यया वृत्त्या गौण्या वा प्रतिपादयन्त्यो लक्षणया तमेव सच्चिदानन्दरूपं निर्धर्मकं तत्पदलक्ष्यं प्रतिपादयन्तीत्यर्थः । सगुणस्यैव निर्गुणत्वेन प्रतिपादने हेतुः—**गुणैरनभिभूतमिति** । बिम्बभूतेश्वरस्य निरुपाधिकत्वात्, मायोपाधिकत्वपक्षेऽपि मायायाः स्वरूपानावरकत्वादिति भावः । गुणानेवाह—**सर्वज्ञमित्यादिना** । **समस्तेति** । उक्तेभ्योऽन्ये ये समस्ताः कल्याणगुणाः सर्जनादिसंकल्पनजगत्स्रष्टृत्वदयालुत्वादयस्तन्निलयम् । उक्तसर्वज्ञत्वादिगुणप्रतिपादिकाः श्रुतीः क्रमेणोदाहरति—**यः सर्वज्ञ इत्यादिना** । सामान्यतः सर्वं जानातीति सर्वज्ञः । तत्तद्विशेषधर्मपुरस्कारेण सर्वं वेत्तीति सर्ववित् । यस्य ज्ञानमयं सर्वज्ञत्वादिलक्षणं तप इति सर्वज्ञतोदाहरणम् । सर्वस्य वशी सर्वोऽपि ब्रह्मादिरस्य वशे वर्तत इत्यर्थः । अनेन सर्वशक्तिता, सर्वस्येशान ईशितेति सर्वेश्वरत्वं, यः पृथिव्यां तिष्ठन् पृथिवीं यमयति ननु सूतादिवद्बहिःस्थित्वेत्यर्थः । पृथिव्या देवताया आन्तर इति अन्तःस्थित्या प्राप्तः सङ्गो निवार्यते । अनेन सर्वनियन्तृत्वं अनेनैव सर्वोपास्यत्वं सर्वफलदातृत्वं च । 'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् । स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान्मयैव विहितान्हिता'नित्यादिष्वन्तर्यामिण एव तद्देवतारूपेणोपास्यत्वसर्वफलदातृत्वयोरवगतेः । स परमात्मा अकामयत कामितवान् । कथम् । बहु स्यां बहु भवेयं

'सत्यं ज्ञानमनन्तं ब्रह्मे'त्याद्याः । तथाभूतेश्वरतां तावत्संसारिणो जीवस्य तन्निवृत्तये 'तत्त्वमसी'त्यादिवाक्यानि बोधयन्ति । तत्र च तत्त्वंपदयोः सामानाधिकरण्यं प्रतीयते । तच्च प्रकारान्तरेणाघटमानं ब्रह्मणि पर्यवसानं गमयति । तथाहि न तावद्वैश्वदेव्यामिक्षेतिव-

---

अहमेव जगद्रूपेण प्रजायेय उत्पन्नो भवेयम् । स ईक्षतेति ऐतरेयश्रुतिः । ऐक्षतेति छान्दोग्ये पाठः । तत् सच्छब्दवाच्यं ब्रह्म तेजोऽसृजत सृष्टवत् । इदं सकलकल्याणगुणनिलयमित्यस्योदाहरणम् । सर्जनसंकल्पस्रष्टृत्वादीनां लोकोपकारार्थत्वेन तादृशानां दयालुत्वादिगुणानां प्रतीतेः । सच्चित्सुखत्वे 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्मे'त्यादयः । अनेन सगुणमेवेत्यारभ्योक्तेन ग्रन्थेन जनानामसृजत्प्रभुरित्यन्तस्य पूर्वार्धस्याभिप्राय उक्तः । ननूक्तश्रुतीनां मुख्यवृत्त्या सगुणपरत्वमेवास्तु मास्तु लक्षणया निर्गुणपरत्वं लक्षणाबीजस्य तात्पर्याद्यनुपपत्तेरभावादित्याशङ्कावान्तरवाक्यरूपाणामेषां तटस्थलक्षणस्वरूपलक्षणवाक्यानामैक्यपरमहावाक्येनैकवाक्यत्वात् लक्षणया निर्धर्मकपरत्वाभावे सर्वज्ञत्वादिधर्मविशिष्टेन ब्रह्मणा संसारिजीवैक्यासंभवेन महावाक्यैकवाक्यत्वासंभवरूपं जीवब्रह्मैक्यासंभवरूपं च महावाक्यैकवाक्यतान्वयानुपपत्त्याख्यं तात्पर्यानुपपत्त्याख्यं च लक्षणाबीजं ध्वनयन् ऐक्यपरश्रुतीनां लक्षणया निर्गुणपर्यवसानमाह—**तथाभूतेश्वरतामित्यादिना** । तत्त्वमसीत्यादीत्यादिपदेन 'प्रज्ञानं ब्रह्म' 'अहं ब्रह्मासी'त्यादिसंग्रहः । ननु तत्त्वमस्यादिवाक्यानि नैक्यबोधकानि उपदेशरूपाणां तेषां यज्ञकर्तृत्वजीवस्तुत्यर्थकत्वात्, अहं ब्रह्मास्मीत्यादिपर्यालोचनादिरूपाणां कर्तृसंस्कारार्थकत्वात्, यथा यज्ञे पत्नीकर्तृकमाज्यावेक्षणमाज्यसंस्कारार्थं विधीयते तद्वदहं ब्रह्मास्मीतीक्षणस्य यज्ञकर्तृसंस्कारार्थविधानसंभवादित्याशङ्क्य तत्कृत्स्न उपदेशेनोपक्रमोपसंहारादिलिङ्गैर्यज्ञप्रकरणभेदादिभिश्च तदसंभवमभिप्रेत्यैक्यविधायकत्वमुपपादयति—**तत्र चेत्यादिना** । अपर्यायपदानामेकविभक्त्यन्तत्वे सत्येकार्थनिष्ठत्वं सामानाधिकरण्यम् । **प्रकारान्तरेण** भागत्यागलक्षणेतरप्रकारेण । प्रकारान्तरेणाघटमानत्वं दर्शयति—**तथाहीत्यादिना** । एकार्थत्वस्य विवक्षितत्वादित्यन्तेन । **न तावदिति** । विश्वेदेवा देवता यस्याः सा वैश्वदेवीति वैश्वदेवीपदमामिक्षावाचकमामिक्षापदमपि तद्वाचकमिति 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो

दुभयोरेकार्थाभिधानेन सामानाधिकरण्यम् । यथोक्तम्—'आमिक्षां देवतायुक्तां वदत्येव तद्धितः । आमिक्षापदसान्निध्यात्तस्यैव विषयार्पण'मिति । कुतः । भिन्नार्थत्वात् । नचाऽजहत्स्वार्थया निरूढलक्षणया विशेषणविशेष्यभावेन नीलमुत्पलमितिवत् । यथोक्तम्—'स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषण'मित्यादि । कुतः । विरुद्धा-

---

वाजिन'मिति श्रुतिस्थवैश्वदेवीपदामिक्षापदयोरेकार्थकत्वेन सामानाधिकरण्यं तद्वत् तत्त्वंपदयोर्नेत्यर्थः । तप्ते दुग्धे दधिमिश्रणे कृते यत्कठिनद्रव्यं संपद्यते तदामिक्षापदवाच्यं, तेन विश्वेदेवदेवताको यागो विधेयः, यत् द्रवद्रव्यं तद्वाजिनं तेन वाजिदेवताको याग इति चातुर्मास्यान्तर्गतवैश्वदेवपर्वप्रकरणस्थोक्तश्रुतेर्विधित्सितोऽर्थः । ननु वैश्वदेव्यामिक्षापदयोर्नैकार्थाभिधायकत्वं वैश्वदेवीपदेनामिक्षाभिधाने आमिक्षापदप्रयोगो न स्यात् । 'उक्तार्थानामप्रयोगः' इति न्यायात् । किंच विश्वेदेवस्तुतिपराया ऋगादेरपि वैश्वदेवीपदार्थत्वसंभवात्कथमामिक्षामात्रार्थकत्वमित्याशङ्कायामाह—**यथोक्तमित्यादि** । एष देवतार्थस्तद्धित अण्प्रत्ययो विश्वेदेवदेवतायुक्तामामिक्षां वदत्येव नतूक्तदूषणभिया न वदतीति शङ्कनीयमिति भावः । तर्ह्यामिक्षापदसान्निध्यवैयर्थ्यं तत्राह—**आमिक्षापदसान्निध्यादिति** । वैश्वदेवीपदेन विश्वेदेवदेवताकः कश्चन द्रव्यविशेष इति सामान्येनामिक्षोक्तावपि कोऽसौ द्रव्यविशेष इत्यपेक्षायामामिक्षापदसान्निध्यादामिक्षारूप इत्यवगम्यते वृक्षमात्रं पश्येत्यादौ सामान्यविशेषशब्देषु तथा दर्शनात् । तथाचामिक्षापदसान्निध्येन तस्यैव तद्धितस्य सामान्यतो द्रव्यवाचकस्य विशेषतो विषयार्पणं भवतीत्युत्तरार्धार्थः । किंच एष तद्धित एव वदति ऋगादिवाचकत्वसंभवेऽपि आमिक्षापदसान्निध्यादामिक्षामेव वदति । अतस्तस्यैव तद्धितकर्तृकमेव विषयार्पणमामिक्षारूपविषयबोधनमित्यादिकमप्यर्थान्तरमूह्यम् । तत्त्वंपदयोर्वैश्वदेव्यामिक्षेतिवत्सामानाधिकरण्याभावे हेतुः—**भिन्नार्थत्वादिति** । परोक्षापरोक्षादिरूपार्थभेदादित्यर्थः । **नचाजहदिति** । न स्वार्थं जहीतस्ते अजहत्स्वार्थे तादृशयोः पदयोर्निरूढलक्षणया नितरां रूढा चासौ लक्षणा तया अनादिपरम्परागतया न सांप्रतं रचितया तया यथा विशेषणविशेष्यभावेन सामानाधिकरण्यं नीलमुत्पलमित्यादौ, तथा तत्त्वंपदयोर्नेत्यर्थः । विशेषणविशेष्यभावं लक्षयति—**स्वबुद्ध्येति** । 'स्वरूपधत्त्वमानेण नहि

र्थत्वेन तदयोगात् । नच जहत्स्वार्थत्वेन संबन्धिलक्षणया कुसुमितद्रुमा गङ्गेतिवत् । कुतः । एकार्थत्वस्य विवक्षितत्वात् । अतो जहदजहत्स्वार्थलक्षणया सोऽयं देवदत्त इतिवद्विरुद्धांशत्यागेनानुगतचि-

---

किंचिद्विशेषण'मिति पूर्वार्धम् । अयमर्थः—स्वाकारज्ञानेन विशेष्यमनवभास्यं किंचिदपि वस्तु स्वरूपसत्त्वमात्रेण स्वस्थितिमात्रेण विशेषणं नहि भवति किंतु येन नीलादिना स्वबुद्ध्या स्वाकारज्ञानेन विशेष्यमुत्पलादि रज्यते भास्यते इतरस्माद्व्यावर्त्यते तद्विशेषणमिति । विरुद्धार्थत्वेनेति । तत्त्वंपदयोरिति शेषः । नीलगुणोत्पलद्रव्ययोराश्रयाश्रयित्वेनाविरुद्धस्वभावयोः स्वार्थत्यागं विना लक्षणया विशेषणविशेष्यभावे विरोधाभावात् । तत्राजहत्स्वार्थानिरूढलक्षणा, तत्त्वंपदयोस्तु परोक्षापरोक्षत्वादिविरुद्धार्थत्वेन स्वार्थत्यागं विना विशेषणविशेष्यभावानुपपत्तेस्तदयोगात् । अजहत्स्वार्थलक्षणया सामानाधिकरण्यासंभवादित्यर्थः । शुक्लादिपदानां गुणिनिरूढत्वे दण्डो भिक्षुर्भिक्षते इत्यजहत्स्वार्थलक्षणया सामानाधिकरण्योदाहरणं बोध्यम् । दण्डधरो भिक्षुरित्याद्यर्थविवक्षणात् । एतेन प्रथमश्लोके शुक्ल इति गुणरूढिरुदाहृता । अत्र पद्ये तु नीलमुत्पलमित्यत्र लक्षणोच्यते इति पूर्वापरविरोधो निरस्तः । मतभेदेनाविरोधात् । नच प्रथमपद्ये शुक्ल इति गुणपरमेव न द्रव्यविशेषणमिति भ्रमितव्यम् । जातिरूढत्वापत्त्या गुणेन निर्देशार्हे इत्येतदुदाहरणत्वासंगतेः । जहल्लक्षणया समानाधिकरणं शङ्कते—नचेति । एकार्थत्वस्येति । तत्त्वंपदार्थयोर्जीवेश्वरयोरैक्यस्य विवक्षितत्वेन सकलस्वार्थत्यागेन पदार्थान्तरलक्षणे पदार्थान्तरेणैक्यं स्यान्नेश्वरादिनेति भावः । एवं प्रकारान्तराणि दूषयित्वा सिद्धान्तमाह—अत इति । वाच्यस्यैकभागत्यागभागान्तरग्रहणे जहदजहत्स्वार्थलक्षणा । सोऽयं देवदत्त इत्यत्र हि तद्देशतत्कालविशिष्टदेवदत्तदेहवाचकस्तच्छब्दः । एतद्देशकालविशिष्टवाचकोऽयंशब्दः । वाच्यभागयोर्देशकालादिविशेषणयोर्विरोधेनैक्यायोगात् विरुद्धतत्कालैतत्कालादिविशेषणभागत्यागेनाविरुद्धविशेष्यस्वरूपमात्रग्रहणेनैक्यबोधनात्सामानाधिकरण्यं तद्वत्तत्त्वंपदयोः सर्वज्ञत्वकिंचिज्ज्ञत्वपरोक्षत्वापरोक्षत्वादिविशिष्टेश्वरजीवचैतन्यवाचकयोः परोक्षत्वापरोक्षत्वादिविशेषणभागविरोधाद्विरुद्धौ विशेषणभागौ त्यक्त्वाऽनुगतमविरुद्धं चैतन्यमात्रं पदद्वयेन गृहीत्वा अखण्डैकत्वबोधनात्सामानाधिकरण्यं तेन च लक्षणया निर्गुणे पर्यवसानं सिद्धम् । निषेधपरश्रुतीनां

दंशेनैकार्थेन सामानाधिकरण्येन निर्गुणे पर्यवसानम् । अस्थूलादिवाक्यानां तु साक्षादुपाधिनिषेधेन तत्पदार्थशोधन उपयोगान्निर्गुण एव पर्यवसानम् । तथाचात्रैवोपक्रमे 'स्वसृष्टमिदमापीये'त्यादिना विशिष्टमालम्बनं वक्ष्यति । अन्ते च 'श्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधना' इत्युपसंहरिष्यति । उपासनादिवाक्यानां

---

ब्रह्मपरत्वमाह—**अस्थूलेति** । 'अस्थूलमनण्वह्रस्वमदीर्घं' 'अशब्दमस्पर्शमरूपमव्ययं' 'अथात आदेशो नेतिनेती'त्यादिवाक्यैर्ब्रह्मणिसर्वोपाधिनिरसनेन निषेधावधिभूतं सर्वाधिष्ठानं ब्रह्म लक्षणया बोध्यत इति तेषां साक्षान्मुखत उपाधिनिषेधकत्वमर्थात्तु लक्षणया निर्गुणे पर्यवसानम् । एतेन पदार्थस्यैव वाक्यार्थत्वमिति पूर्वपक्षाभिमतो नियमः प्रत्युक्तः । अस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति प्रश्ने निषेधरूपेषु न तारारूपो नोष्णकर इति प्रतिवचनवाक्येषु हि न कस्यापि पदस्यार्थश्चन्द्रस्तथापि वाक्यैरेभिर्बोध्यते इति स्पष्टम् । तथा विषं भुंक्ष्वेति शत्रुगृहे भोजननिषेधतात्पर्यके वाक्ये विषपदस्य वा भुंक्ष्वपदस्य वा न भोजननिवृत्तिरर्थस्तथापि वाक्येन लक्षणया बोध्यते, एवं 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिवाक्यैरुपक्रमाद्यवधृताखण्डतात्पर्यकैर्मुख्यवृत्त्या विशिष्टवाचकैः समुदायलक्षणया निर्धर्मकमखण्डं ब्रह्म बोध्यते । वाक्ये लक्षणाया मीमांसकैः स्वीकारात् । वाच्यार्थोनां प्रामाण्यप्रस्तरत्वेनाध्यासिकसंबन्धस्याप्युक्तत्वाच्चेत्यादितः प्रघट्टकाशयः । तथाभूतेश्वरतामित्यादिना साक्षादुपाधिनिषेधेनेत्सन्तेनाकल्पनायेति पदव्याख्यार्थप्रतिपादनम् । ननु मुख्यवृत्त्या श्रुतीनां विशिष्टमवलम्बनमिति प्रश्नादिपदव्याख्यार्थो वर्णितस्तत्र किं तात्पर्यग्राहकमित्याशङ्कायामाह—**तथाचेति** । तत्र हि पद्ये शयानं सह शक्तिभिरित्सनेन 'श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया । विद्ययाऽविद्यया शक्त्या मायया मिनिषेवित'मित्याद्युक्तैश्वर्यवैशिष्ट्यालम्बनत्वं स्पष्टमेवोच्यत इत्यर्थः । अकल्पनायेत्यनेन स्थूलादिकल्पनानिषेधरूपेणातन्निरसनमुखेन निषेधश्रुतीनां ब्रह्मणि पर्यवसानं व्यज्यत इत्यत्र तात्पर्यग्राहकमाह—**अन्तेचेत्यादिना उपसंहरिष्यतीत्यन्तेन** । मात्रार्थं चेत्यादिग्रन्थाभिप्रायमाह—**उपासनादीति** । आदिपदेन कर्मकाण्डोक्ताग्निहोत्रादिवाक्यानि । **अयं भावः**—उपासनाकाण्डकर्मकाण्डोक्ततत्तदनुष्ठानैर्हि धर्मार्थकामेति त्रिवर्गप्राप्तिः । धर्मादेरपि परमफलं मोक्ष एव 'धर्मस्य

सैषा ह्युपनिषद्ब्राह्मी पूर्वेषां पूर्वजैर्धृता ।
श्रद्धया धारयेद्यस्तां क्षेमं गच्छेदकिंचनः ॥ ३ ॥

क्रियार्थप्रवृत्तसृष्ट्याद्यवलम्बनेन ज्ञानसाधनविधानेन तत्परत्वमित्येषा दिक् ॥ २ ॥

अत्र चानादिशिष्टपरम्परागतत्वान्न संदेहो युक्त इत्याह—सैषेति । सैषा यथोक्तालम्बना । ब्राह्मी ब्रह्मपरा । श्रद्धया आदरेण वैतण्डिकतर्कानभिनिवेशेन यः श्रवणादिना धारयेत् स अकिंचनः निरस्तदेहाद्युपाधिः सन् परं पदं प्राप्नुयादिति ॥ ३ ॥

---

ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते । नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः । कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता । जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभि'रिति प्रथमस्कन्धोक्तेः । मोक्षश्च ब्रह्मज्ञानादित्युपासनाकर्मकाण्डयोरपि परमतात्पर्यं ब्रह्मण्येव । तथाच क्रियार्थप्रवृत्ताश्च सृष्ट्यादयश्च तेषामवलम्बनेनेति द्वन्द्वगर्भतत्पुरुषाश्रयेणेत्थं पदयोजनार्थः । दहरवैश्वानराद्युपासनावाक्यानि त्रिवर्गफलोद्देश्यकयज्ञादिक्रियार्थं प्रवृत्तान्पुरुषानवलम्ब्य निर्धर्मकब्रह्मण उपास्यत्वसिद्ध्यर्थं सृष्टिस्थितिलयनियमनादींश्चोपाधीनवलम्ब्य तत्तदुपासनाविधानद्वारा ज्ञानसाधनं चित्तैकाग्र्यमेव विदधति । निवृत्तान् ज्ञानसिद्धाननियोज्यान् प्रति उपासनाविधेरप्यप्रवृत्तेः क्रियार्थप्रवृत्तानालम्ब्येत्युक्तम् । नच सृष्ट्याद्यनालम्बने ब्रह्मणः सधर्मकत्वसिद्धिर्नापि तां विनोपासना सिध्यतीति सृष्ट्याद्यालम्बनेनेत्युक्तम् । आदिपदोक्ताग्निहोत्रादिवाक्यानि चैहिकफलकक्षुध्यादिक्रियार्थं प्रवृत्तानवलम्ब्य रोचनार्थं न सृष्ट्यादीत्यादिपदोक्तस्वर्गादिफलान्यवलम्ब्य ज्ञानसाधनं चित्तशुद्धिविविदिषादिकमेव तात्पर्यतो विदधति । 'तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'त्यादिश्रुतेः । 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि'ति पारमर्षसूत्रात्, 'कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथे'त्याद्येकादशाद्युक्तेश्च । अन्यार्थप्रवृत्तेति पाठेऽप्ययमेवार्थः । एवं सर्वस्यापि वेदस्य ब्रह्मपरत्वं सिद्धम् । ननु लक्षणादिप्रकारः स्पष्टं टीकायां नोक्त उपासनादिकाण्डस्येत्थं पर्यवसानवर्णने बीजं च नोक्तमित्याशङ्कायामाह—**एषा दिगिति** । दिगर्थस्तूपपादित एवेति सक्षेपः ॥ २ ॥

**वैतण्डिकेति** । स्वपक्षस्थापनहीना वितण्डा तत्प्रधाना ये तर्कास्तदाग्रहराहित्येन ॥ ३ ॥

अत्र ते वर्णयिष्यामि गाथां नारायणान्विताम् ।
नारदस्य च संवादमृषेर्नारायणस्य च ॥ ४ ॥
एकदा नारदो लोकान् पर्यटन् भगवत्प्रियः ।
सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥ ५ ॥
यो वै भारतवर्षेऽस्मिन् क्षेमाय स्वस्तये नृणाम् ।
धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः ॥ ६ ॥
तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः ।
परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह ॥ ७ ॥
तस्मै ह्यवोचद्भगवानृषीणां शृण्वतामिदम् ।
यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम् ॥ ८ ॥

श्रीभगवानुवाच—

स्वायंभुव ब्रह्मसत्रं जनलोकेऽभवत्पुरा ।
तत्रस्थानां मानसानां मुनीनामूर्ध्वरेतसाम् ॥ ९ ॥

---

एतदेव सर्वश्रुत्यर्थनिरूपणेन प्रपञ्चयितुमितिहासमवतारयति—अत्रेति । नारायणान्वितां नारायणः प्रवक्तृत्वेनान्वितो यस्यां तां गाथामितिहासम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

ब्रह्मसत्रमिति । यथा यजमाना एव समाना ऋत्विगादिरूपेण यत्र कर्म कुर्वन्ति तत्कर्म सत्रं प्रसिद्धम् । तथा यत्र समाना एव वक्तृश्रोतृभावेन ब्रह्म मीमांसन्ते तत् ब्रह्मसत्रम् ॥ ९ ॥

---

गाथासंवादशब्दयोर्नियतलिङ्गयो सामानाधिकरण्यम् । नारदस्य च प्रष्टुर्नारायणस्य प्रवक्तुः संवादरूपां गाथाम् । अतएव प्रवक्तृत्वेन नारायणोऽन्वितो यस्यां तथाविधामित्यर्थः । प्रष्टृत्वेन नारदान्वितापि गाथा तथापीह प्रष्टुरसत्वाद्गुः खेनं ननु वक्ष्यमाणब्रह्मसत्र इव श्रोतृप्रवक्त्रो: साम्यमिति ज्ञापनाय नारायणान्वि-

श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम् ।
ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते ।
तत्र ह्ययमभूत्प्रश्नस्त्वं मां यमनुपृच्छसि ॥ १० ॥
तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः ।
अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे ॥ ११ ॥

सनन्दन उवाच—

स्वसृष्टमिदमापीय शयानं सह शक्तिभिः ।
तदन्ते बोधयांचक्रुस्तल्लिङ्गैः श्रुतयः परम् ॥ १२ ॥

---

अहो, तर्हि मया कथं तत्र ज्ञातमित्यत आह—श्वेतद्वीपमिति । तदीश्वरं तत्रस्थं मामेवानिरुद्धमूर्तिम् ॥ १० ॥

ननु सर्वज्ञास्ते कस्तत्र वक्ता प्रष्टा वा तत्राह—तुल्यश्रुतेति । श्रुतादिभिरविशेषाः । अरिमित्रोदासीनहीनत्वेन निरुपमकरुणाः । अतः सर्वे प्रवचनयोग्या अपि केनापि कौतुकेनैकं प्रवक्तारं कृत्वान्ये पप्रच्छुरित्यर्थः ॥ ११ ॥

**स्वसृष्टमिति** । स्वयं निर्मितमिदं विश्वं प्रलयसमये आपीय संहृत्य शयानं योगेन निद्राणमिव वर्तमानम् । तदन्ते प्रलयान्ते तल्लिङ्गैस्तत्प्रतिपादकैर्वाक्यैः परमीश्वरं सृष्टिसमये प्रथमनिःश्वासभूताः श्रुतयः प्रबोधयामासुः ॥ १२ ॥

---

तामित्युक्तम् । परे तु नारायणे ब्रह्मणि समन्वितामित्याहुः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

प्रलयसमय इति । हिरण्यगर्भमुक्तिनिमित्ते महाप्रलये दैनंदिनप्रलये चेत्यर्थः । **निद्राणमिवेति** । जगत्कार्यं प्रति अकृतावधानं सन्तं प्रबोधयामासुः विश्वसृष्टिविनाशादिकार्ये अवधानं कारयांचक्रुः । सर्वज्ञेऽपि तादृशबोधनस्य स्वाधिकारप्राप्तत्वेनावश्यं कर्तव्यत्वात् ॥ १२ ॥

यथा शयानं सम्राजं वन्दिनस्तत्पराक्रमैः ।
प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः ॥ १३ ॥

श्रुतय ऊचुः—

जय जय जह्यजामजित दोषगृभीतगुणां
त्वमसि यदात्मना समवरुद्धसमस्तभगः ।
अगजगदोकसामखिलशक्त्यवबोधक ते
क्वचिदजयाऽऽत्मना च चरतोऽनुचरेन्निगमः ॥१॥१४॥

---

यथेति । सुश्लोकैः शोभनाः श्लोकाः कीर्तयो येषु तैः पराक्रमैः ॥ १३ ॥

जय जयेति । भो अजित, जय जय उत्कर्षमाविष्कुरु । आदरे वीप्सा । केन व्यापारेण । अगजगदोकसां । अगानि स्थावराणि जगन्ति जङ्गमानि च ओकांसि शरीराणि येषां जीवानां तेषां अजां अविद्यां जहि नाशय । किमिति गुणवती हन्तव्येत्यत आह— दोषगृभीतगुणाम् । दोषायानन्दाद्यावरणाय गृहीता गुणा यया ताम् । 'हृग्रहोर्भश्छन्दसी'ति भकारः । इयं स्वैरिणीव परप्रतारणाय गुणान् गृह्णाति अतो हन्तव्येति, तर्हि मय्यपि दोषमावहेदिति ममापि तत्र का शक्तिः स्यादत आह—त्वमिति । यदयमात्ममा-

---

तत्र प्रबोधनं महदादिगुरूणामपि साध्यं सहजतद्दासेनैवेति दृष्टान्तेन व्यञ्जयति —यथेति ॥ १३ ॥

जय जयेति । अजामविद्यामिति । न जायत इत्यजा अनादिरित्यर्थः । 'जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा । अविद्या तच्चितोर्योगः षडस्माकमनादय' इत्युक्तेः अनादिभावरूपत्वेनारम्भवादाविनुमशक्येति भाव । ईदृग्या अपि नाशयोग्यताम्भजनाया अविद्यामिति व्याख्यातं न विद्यत इत्यविद्येति । अभ्युपगत्वेन परमार्थतः कालत्रयेऽप्यविद्यमानत्वादधिष्ठानस्वरूपप्रकाशेन नाशयोग्यां तां जहीति

त्मना स्वरूपेणैव समवरुद्धसमस्तभगः संप्राप्तसमस्तैश्वर्योऽसि । वशीकृतमायत्वादिति भावः । ननु स्वयमेव ते ज्ञानवैराग्यादिना किं न हन्युरित्यत आह—**अखिलशक्त्यवबोधकेति** । तेषां त्वमेवान्तर्यामी सर्वशक्त्युद्बोधकः । अतो न ते ज्ञानादौ स्वतन्त्रा इति भावः । नन्वहमकुण्ठज्ञानैश्वर्यादिगुणो जीवानां कर्मज्ञानादिशक्त्यवबोधनेनाविद्याहन्तेत्यत्र किं प्रमाणमिति चेत्, अहमेव प्रमाणमित्याह—**निगमः** वेदः । ननु एवंभूते मयि कथं श्रुतीनां प्रवृत्तिस्तत्राह—**क्वचिदिति** । कदाचित्सृष्ट्यादिसमये अजया मायया चरतः क्रीडतः, नित्यं चानुप्रभगवया सत्यज्ञानानन्तानन्दैकरसेनात्मना च चरतो वर्तमानस्य निगमोऽनुचरेत्प्रतिपादयेत् । कर्मणि षष्ठ्यौ । 'यतो वा इमानि भूतानि जायन्ते' । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' 'य आत्मनि तिष्ठन्' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'यः सर्वज्ञः सर्ववि'दित्यादिनिगमकदम्बस्त्वामेवंभूतं प्रतिपादयतीत्यर्थः ॥ १ ॥ १४ ॥

---

भावः । **गुणवतीति** । अगणितदर्शनचातुर्यादिगुणशालिनीत्यर्थः । **निगमो वेद इति** । अनुचरेदिति पदसंबन्धेनार्थपूर्तिः । एवं निगमोऽनुचरेदिति पदद्वयमानार्थं उक्तः । क्वचिदजयेत्यादिसर्वार्थयोजनयाह—**नन्वित्यादि** । यतोवेत्यारभ्य प्रपद्य इत्यन्ता श्रुतिरजया चरत इत्यस्योदाहरणम् । य आत्मनीत्यादिरखिलशक्त्यवबोधकेत्यस्य । सत्यं ज्ञानमित्यादिरात्मना चरत इत्यस्य । अथ श्रुत्यर्थः—'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति' । यतो यस्मान्निमित्तोपादानोभयरूपाद्ध प्रसिद्धानि इमानि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि जायन्ते । जातानि सन्ति येन जीवन्ति स्थितिं लभन्ते । नाशं गच्छन्ति सन्ति यत् अभिसंविशन्ति यस्मिंस्तादात्म्यं प्राप्नुवन्ति तद्ब्रह्मेति विजिज्ञासस्व विचारयेति । **यो ब्रह्माणमिति** । यः परमेश्वरः पूर्वं

**बृहदुपलब्धमेतदवयन्त्यवशेषतया**
**यत उदयास्तमयौ विकृतेर्मृदिवाविकृतात् ।**

---

जयजयाजित जह्यगजंगमावृतिमजामुपनीतमृषागुणाम् ।
नहि भवन्तमृते प्रभवन्त्यमी निगमगीतगुणार्णवता तव ॥ १ ॥

ननु कथं मामेवं प्रतिपादयन्ति । यतः 'इन्द्रो यातोऽवसितस्य राजे'त्यादिभिः—इन्द्रः यातो जङ्गमस्य अवसितस्य स्थावरस्य च राजेति प्रतिपाद्यते । तथा 'अग्निर्मूर्धा दिव' इत्यादिभिश्चैवंभूतत्वेनाग्न्यादयः प्रतिपाद्यन्ते तत्राह—बृहदुपलब्धमेतदिति । अयमर्थः—एतदुपलब्धं दृष्टमिन्द्रादि सर्वं बृहत् ब्रह्मत्वमित्येवावयन्ति जानन्ति । कथम् । बृहत एवावशेषतयाऽवशिष्यमाणत्वेन । कुतः । यतो बृहतः । सर्वस्योदयास्तमयौ उत्पत्तिलयौ सर्वोपादानत्वात् । तर्हि किं विकारित्वं बृहतः । न । अविकृतात् । विवर्ताधिष्ठानत्वेनाविकारादित्यर्थः । वाशब्द उपमार्थः । यथा घटादेर्विकृतेर्मृदि उदयास्तमयौ तद्वत् । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव

---

सृष्ट्यादौ ब्रह्माणं हिरण्यगर्भं विदधाति सृजति । तस्मै हिरण्यगर्भाय वेदान् प्रहिणोति ददाति । तं देवं द्योतमानं ज्ञानरूपं आत्मबुद्धिं स्वविषयबुद्धिं प्रकाशयति ददाति, यद्वा आत्माकारबुद्धौ प्रकाशते तं मुमुक्षुरहं शरणं गच्छामीति । य आत्मनि जीवे तिष्ठन् आत्मानं जीवं नियमयति सोऽन्तर्यामी सर्वस्येत्यन्तर्यामिब्राह्मणतात्पर्यम् । सत्यं कालत्रयाबाध्यं ज्ञानस्वरूपं त्रिविधपरिच्छेदशून्यं ब्रह्म यो वेद सोऽश्नुते सर्वान्कामान्सहेति ॥ १ ॥ १४ ॥

**इन्द्रो यात इति** । या प्रापण इत्यस्माच्छतृप्रत्यये षष्ठी । तथाच यातो जङ्गमस्य अवसितस्य स्थावरस्येन्द्रो राजा ईश्वर इति । 'अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या' अयमग्निर्दिवो मूर्धा सूर्यरूपेण द्युलोकस्य मूर्धा भवति । ककुत् श्रेष्ठ. । पृथिव्या पति जाठरादिरूपेण भूलोकस्य पालक इत्यर्थं । **वाचारम्भणमिति** ।

अत ऋषयो दधुस्त्वयि मनोवचनाचरितं
कथमयथा भवन्ति भुवि दत्तपदानि नृणाम् ॥२॥१५॥

---

सत्यम्' 'सर्वं खल्विदं ब्रह्मे'त्यादिभिस्तथा प्रतिपादनादित्यर्थः। अतः कारणादृषयो मन्त्रास्तद्द्रष्टारो वा त्वय्येव मनोवचनाचरितं दधुः मनसा आचरितं तात्पर्यं, वचनाचरितमभिधानं च धृतवन्तः। न पृथग्विकारेष्वित्यर्थः। अत्र निदर्शनम् कथमयथेति। नृणां भूचराणां यत्रकुत्रापि दत्तानि निक्षिप्तानि पदानि भुवि कथमयथा भवन्ति अदत्तानि भवन्ति। अतो यथा मृत्पाषाणेष्टकादिषु दत्तानि पदानि भुवं न व्यभिचरन्ति, तथा यत्किमपि विकारजातं वदन्तो वेदास्त्वामेव सर्वकारणं परमार्थभूतं प्रतिपादयन्तीत्यर्थः ॥ २ ॥ १५ ॥

द्रुहिणवह्निरवीन्द्रमुखामरा जगदिदं न भवेत्पृथगुत्थितम्।
बहुमुखैरपि मन्त्रगणैरजस्त्वमुरुमूर्तिरतो विनिगद्यसे ॥ २ ॥

---

वाचारम्भमाणं उच्चार्यमाणं नामधेयं नामैव विकारो नतु घटशरावादिनामातिरिक्तो मृदि विकारो वस्तुतोऽस्ति, परमार्थतो मृत्तिकेत्येव मृत्तिकैव [illegible] सत्यं वस्तु अस्तीति दृष्टान्तः। एवं परमकारणब्रह्ममात्रत्वं सर्वकार्यजातस्येति 'सर्वं खल्विदं ब्रह्म' तस्य 'तज्जलानिति शान्त उपासीते'ति वाक्यशेषः। सर्वमिदं जगत् ब्रह्मैव खलु। तज्जलान् तस्माद्ब्रह्मणो जायत इति तज्जं, तस्मिन्लीयत इति तल्लं, स्थितिकाले तस्मिन्नेवानिति प्राणितीति तदन्। तज्जलात्तल्लात्तदनत्वाच्चेत्यर्थ.। इति, अतः शान्तो रागद्वेषादिशून्य. समुपासीतेति। द्रष्टारो वेति। वाशब्दः समुच्चये। ऋषिपदे एकशेषेणोभयविवक्षणात्। तेन मन्त्रद्रष्टारो मनसाचरितं दधुः। मन्त्रास्तु वचनाचरितमभिधानं दधुरिति यथायथं संबन्धः ॥ २ ॥ १५ ॥

२ वेद०

इति तव सूरयस्त्र्यधिपतेऽखिललोकमल-
क्षपणकथामृताब्धिमवगाह्य तपांसि जहुः ।
किमुत पुनः स्वधामविधुताशयकालगुणाः
परम भजन्ति ये पदमजस्रसुखानुभवम् ॥ ३ ॥ १६ ॥

---

त्वमेव सर्वनिगमगोचर इति सतां प्रवृत्त्या द्रढयति—**इति तवेति** । त्वमेव सर्वकारणत्वेन परमार्थ इतिकृत्वा भोस्त्र्यधिपते त्रिगुणमायामृगीनर्तक, सूरयो विवेकिनस्तव अखिललोकमलक्षपणकथामृताब्धिं सकलजनवृजिननिरसनहेतुं कीर्तिसुधासिन्धुमवगाह्य निषेव्य तपांसि तपन्तीति तपांसि पापानि दुःखानि वा जहुस्त्यक्तवन्तः । त्वदीयकथामात्रेण यदा पापत्यागस्तदा किमु वक्तव्यम्—ये पुनः स्वधामविधुताशयकालगुणाः स्वधाम्ना स्वरूपस्फुरणेनैव विधुतास्त्यक्ता आशयगुणा अन्तःकरणधर्मा रागादयः कालगुणा जरादयश्च यैस्ते तथा । हे परम, तवाजस्रसुखानुभवमखण्डानन्दानुभवं पदं स्वरूपं भजन्ति सेवन्ते तथाभूताः दुःखानि त्यजन्तीति । 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवैवंविदि पापं कर्म न श्लिष्यते' 'न कर्मणा लिप्यते पापकेन' 'तत्सुकृतदुष्कृते विधुनुते'

---

तथाभूता दुःखानि त्यजन्तीति किमु वक्तव्यमित्यन्वयः । श्रुत्यर्थस्तु—ज्ञानमाहात्म्यपरमुपकोशलं प्रति जाबालवचनम्—**यथा पुष्करेति** । कमलपत्रे जलानि न श्लिष्यन्ते न लग्नानि भवन्ति, एवं एवंविदि ब्रह्मज्ञानवति पापं कर्म न श्लिष्यत इति । पापकेन कर्मणा न लिप्यते न लिप्तो भवति तत्तदा ब्रह्मलोकमार्गे विरजानदीतरणकाले साक्षात्कारकाले वा पुण्यपापे विधुनुते त्यजतीत्यर्थः । एतमिति यथोक्तात्मविदं न तपति न संतापयति । १. इत्यादेरवधारणे १. संतापमेवाह—

दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधा
महदहमादयोऽण्डमसृजन्यदनुग्रहतः ।
पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः
सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥ ४ ॥ १७ ॥

'एतꣳह वाव न तपति किमहꣳसाधु नाकरवं किमहं पापमकरव' मित्यादिश्रुतेरित्यर्थः ॥ ३ ॥ १६ ॥

सकलदेवगणैरितसद्गुणस्त्वमिति सर्वमनीषिजना रताः ।
त्वयि सुभद्र गुणश्रवणादिभिस्तव पदस्मरणेन गतक्लमाः ॥ ३ ॥

'असुर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः' । तथा 'नचेदिहाऽवेदीन्महती विनष्टिः' 'य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्ती'त्याद्याः श्रुतयः पूर्वश्लोकोक्तोभयविधभजनहीनान्निन्दन्ति—दृतय इवेति । असुभृतो नरा यदि ते अनुविधा अनुविदधतीत्यनुविधा अनुवर्तिनः । भक्ता इति यावत् । तर्हि श्वसन्ति जीवन्ति सफलजीवना भवन्ति । इतरथा दृतय इव भस्त्रा इव वृथाश्वासा इत्यर्थः । नन्व-

---

किमिति । अहं साधु पुण्यकर्म किं कुतो नाकरवं न कृतवानस्मि, कस्मात्पापं कृतवानस्मीत्येवं संतापो विदुषो नेत्यर्थः ॥ ३ ॥ १६ ॥

असुर्या इति हस्तमध्यं पदम् । असुराणामिमे असुर्याः प्रसिद्धास्ते लोकाः अन्धेन गाढेन तमसा आत्माज्ञानेन प्रसिद्धान्धकारेण वा वृता व्याप्ताः । प्रेत्य मृता तान् लोकांस्ते गच्छन्ति ये केच केचन आत्महनः अविद्यादोषेण आत्मानस्तित्वकर्तारो ब्रह्मज्ञानशून्या दुर्योनीः प्राप्नुवन्तीत्यर्थः । चेत् यदि नावेदीत् ब्रह्म न ज्ञातवान् तदा महती विनष्टिः हानिः दुष्परिहरा । जन्ममरणादिरूपा संसृतिरित्यर्थः । उभयविधभजनेति । 'कथामृताब्धौ' इत्युक्तश्रवणकीर्तनरूपं भजनमेकम् । 'भजन्ति ये पदमजस्रं' इत्युक्तपादसेवनरूपभजनमपरम् । तर्हि

भक्तानामपि कामादिफलमस्त्येव । न । कार्यकारणानुग्राहकत्वेन जीवनहेतोस्तवाभजने कृतघ्नानां तदपि न सिद्ध्येदित्याशयेनाह— **महदहमादय इति** । महानहंकारश्च आदिर्येषां ते यदनुग्रहतः यस्यानुप्रवेशेन लब्धसामर्थ्याः सन्तः, अण्डं देहं समष्टिव्यष्टिरूपं सृष्टवन्तः । तत्र च पश्चापि कोशानन्नमयादीनाविश्य तत्तदाकारः सन् यश्चेतयते स त्वं, तदाह—**पुरुषविध इति** । पुरुषस्यान्नमयादेर्विधेव विधा आकारो यस्य स तथा । ननु चिदेकरसस्य कथं तत्तदाकारता अत आह—**अन्वयोऽत्रेति** । अत्र एष्वन्नमयादिष्वन्वेतीत्यन्वयः । अतस्तत्तदाकारतेति । एवं तर्हि सत्यत्वमसङ्गत्वं च कथं तत्राह—**चरमोऽन्नमयादिषु य इति** । अन्नमयादिषूपदिश्यमानेषु यश्चरमो 'ब्रह्मपुच्छं प्रतिष्ठे'ति पुच्छत्वेनोक्तः स त्वमिति संबन्धः । ननु तथाप्यन्नमयादिष्वन्वितत्वेऽसङ्गत्वव्याहतिरेव तत्राह—**सदसतः परं त्वमथ यदेष्ववशेषमृतमिति** । सदसतः

---

सत्यत्वमिति । पुरुषविधस्य साकारत्वेन सावयवत्वान्नाशावश्यंभावात् । कोशेष्वन्वये कोशसंबन्धध्रौव्यात् सत्यत्वासङ्गत्वव्याहतिरिति भावः । अन्नमयादिषु अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेषु पुच्छत्वेन सर्वाधारत्वेनोक्त इति अन्नमयाद्याकारत्ववर्णनस्य निराकारपुच्छब्रह्मबोधार्थत्वान्निराकारत्वस्यैव वास्तवत्वात्सत्यत्वमव्याहतमिति भावः । ननु कोशेष्वन्वये असङ्गत्वक्षतिरनन्वये व्यापकत्वक्षतिरिति गूढाशयः शङ्कते—**नन्विति** । परं व्यतिरिक्तमिति असङ्गमित्यर्थः । अन्नमयादेः कल्पितत्वेन मिथ्यात्वात् तेष्वन्वयेऽपि तत्संबन्धस्य मिथ्यात्वात् उभयोः संबन्धिनोः सत्यत्व एव संबन्धस्य सत्यत्वनियमात् कल्पितसंबन्धेन न वास्तविकासङ्गत्वक्षतिरिति भावः । अबाध्यमिति कोशैः सह तद्बाधेन बाधापत्त्या सर्वबाधे शून्यवादापत्तेर्निरवधिकबाधानुपपत्तेश्च सर्वबाधावधिभूतावशेषसिद्ध्याप्य-

उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः
परिसरपद्धतिं हृदयमारुणयो दहरम् ।

---

स्थूलसूक्ष्मादन्नमयादेः परं व्यतिरिक्तं तत्साक्षिभूतं अवशेषमवशिष्यत इत्यवशेषमबाध्यम् । अथ अतएव ऋतं सत्यम् । तर्हि किमर्थं तेष्वन्वय उक्तः । शाखाचन्द्रवच्छुद्धस्वरूपलक्षणार्थम् । तथाहि 'स वा एष पुरुषोऽन्नरसमयस्तस्येदमेव शिर' इत्यादिना स्थूलसूक्ष्मक्रमेण पञ्चकोशानुपदिश्य 'तस्य पुरुषविधतामन्वयं पुरुषविध' इति पुनः पुनस्तदन्वितत्वेनालक्ष्य 'ब्रह्मपुच्छं प्रतिष्ठे'ति सर्वसाक्षिशुद्धस्वरूपनिरूपणमित्यनवद्यम् ॥ ४ ॥ १७ ॥

नरवपुः प्रतिपद्य यदि त्वयि श्रवणवर्णनसंस्मरणादिभिः ।
नरहरे न भजन्ति नृणामिदं दृतिवदुच्छ्वसितं विफलं ततः ॥४॥

एवं तावत्सर्वात्मके परमेश्वरे सर्वश्रुतिसमन्वयेन सद्भजनीय-

---

सन्नत्वसिद्धिरिति भावः । सत्यमिति । अतएवासन्नं च सन्नस्य सत्त्वादर्शनादिति भावः । असन्नस्यापि कोशान्वयवर्णनमसन्नपुच्छब्रह्मबोधार्थमेवेति स्पष्टीकर्तुं शङ्कते—तर्हीति । वस्तुतोऽसन्नत्वेऽन्वयवर्णनं नोपयुक्तमित्यर्थः । समाधत्ते—शाखाचन्द्रवदिति । सूक्ष्मचन्द्रकलाप्रदर्शनायात्यन्तं चन्द्रसंबन्धशून्यापि वृक्षशाखा मुग्धंप्रति चन्द्रत्वेन प्रथमं प्रदर्श्यते ततः शाखाग्रे चन्द्र इत्यादि प्रदर्श्यते तद्वत् शुद्धस्वरूपबोधनार्थं कोशपञ्चकेऽन्वयोऽसन्नस्याप्यात्मन उच्यत इत्यर्थः । स वा एष इति । एषोऽन्नरसविकारः स्थूलदेह एव पुरुष आत्मेत्युक्त्वान्योऽन्तर आत्मा प्राणमय इत्येवं प्राणमय-मनोमय-विज्ञानमया-नन्दमयानां पूर्वपूर्वतः सूक्ष्माणामान्तराणां च कोशानामुपदेशं कृत्वा प्रतिकोशपर्यायं 'तस्य पुरुषविधतामन्वयं पुरुषविध' इति वाक्यमुच्यते । तस्यान्नमयादेः पुरुषविधतां पुरुषाकारतामनु अनुसृत्य अयमुत्तरोत्तरकोशोपाधिकोऽपि पुरुषविधः पुरुषाकारो भवतीति तस्य पुरुषेत्यादिश्रुतेरर्थः । एवं पुनःपुनः प्रतिकोशपर्यायं कोशान्वितत्वं प्रदर्श्य 'ब्रह्मपुच्छं प्रतिष्ठे'ति सर्वाधारसर्वसाक्षिशुद्धस्वरूपनिरूपणमिति ॥ ४ ॥ १७ ॥

संगतिं वक्ष्यमुख्यश्लोकचतुष्टयार्थमनुवदति—एवं तावदिति । सर्वश्रुतिसम-

तत उदगादनन्त तव धाम शिरः परमं
पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे ॥ ५ ॥१८॥

---

त्यमुक्त्वा अभक्तनिन्दया च तदेव दृढीकृत्येदानीमनवगाह्यमहिमनि प्रथमं तावदुपाध्यालम्बनमुपासनम् 'उदरं ब्रह्मेति शार्कराक्षा उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्मा हैव ता इत ऊर्ध्वं त्वेवोदसर्पत्तच्छिरोऽश्रयत' इत्याद्याः श्रुतयो विदधतीत्याह—**उदरमुपासत इति ।** ऋषिधर्मसु ऋषीणां संप्रदायमार्गेषु ये कूर्पदृशस्ते उदरालम्बनं मणिपूरकस्थं ब्रह्मोपासते ध्यायन्ति । शार्कराक्षा इति श्रुतिपदस्य प्रतिपदं कूर्पदृश इति । कूर्पं शर्करारजो विद्यते दृक्षु अक्षिषु येषां ते तथा । रजःपिहितदृष्टयः स्थूलदृष्टय इति यावत् । उदरस्य हृदयापेक्षया स्थूलत्वात् । यद्वा कूर्पं सूक्ष्मम् । सूक्ष्मदृश इत्यर्थः । तदा हृदयस्थं सूक्ष्ममेवालक्ष्य तत्प्रवेशाय प्रथममुदरस्थमुपासत इति भावः । आरुणयस्तु साक्षात् हृदयस्थं दहरं सूक्ष्ममेवोपासते । हृदयविशेषणम् । **परिसरपद्धतिमिति ।** परितः सरन्ति प्रसर्पन्तीति

---

न्वयेनेत्यन्तः प्रथमश्लोकद्वयार्थः । सद्भजनीयत्वमिति इति तव सूरय इत्यस्यार्थः । अभक्तनिन्दयेति दृतय इवेत्यस्य । उदरं ब्रह्मेति उदरस्थवैश्वानरोपाधिकं ब्रह्म शर्कराक्षस्यापत्यानि शार्कराक्षा ऋषय उपासते चिन्तयन्ति । हृदयं उदरादूर्ध्वभूतहृत्कमलस्थं दहराकाशाख्यं ब्रह्मेत्युपासते । **ब्रह्मा हैव ता इति ।** ह इव इत्येतौ निपातौ स्पष्टार्थौ । ता इति ते उदरहृदयोपाधिके ब्रह्मा ब्रह्मणी एवेत्यर्थः । ता ब्रह्मा इति पदद्वये द्विवचनस्य डादेशः । **ऊर्ध्वं त्वेवेति ।** तु पुनस्तदेव ब्रह्म सुषुम्नानाडीरूपेणोर्ध्वमुदसर्पदगच्छत् । तच्चोर्ध्वमुद्गम्य शिरोऽश्रयत आश्रितवत् । **हृदयविशेषणमिति ।** अजहल्लिङ्गत्वान्नपुंसकत्वं नेति ज्ञेयम् । परिसरा नाड्यस्तासामिति । तथाच परिसरापद्धतिमितिवक्तव्ये ह्रस्वो 'ङयापोः सं-

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया
तरतमतश्चकास्स्यनलवत्स्वकृतानुकृतिः ।

---

परिसरा नाड्यः तासां पद्धतिं मार्गं प्रसरणस्थानमित्यर्थः । विशेषणस्य फलमाह—तत इति । ततो हृदयात् भो अनन्त, तव धाम उपलब्धिस्थानं सुषुम्नाख्यं परमं श्रेष्ठं ज्योतिर्मयं शिरः मूर्धानं प्रति उद्गात् उदसर्पत् । मूलाधारादारभ्य हृदयमध्याद्ब्रह्मरन्ध्रंप्रति उद्गतमित्यर्थः । कथंभूतं धाम । यत्समेत्य प्राप्य पुनरिह कृतान्तमुखे मृत्युमुखे संसारे न पतन्ति । तथाच श्रुतिः—'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती'ति ॥ ५ ॥ १८ ॥

उदरादिषु यः पुंसां चिन्तितो मुनिवर्त्मभिः ।
हन्ति मृत्युभयं देवो हृद्गतं तमुपास्महे ॥ ५ ॥

नन्वीश्वरस्यापि तर्हि जीववदुदरादिसंबन्धे तदनुप्रविष्टस्य च तारतम्ये सति केन विशेषेणोपास्यत्वमितीमामाशङ्कां परिहरन्त्यः 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चे' त्याद्याः श्रुतयः स्तुवन्तीत्याह—स्वकृतविचित्रयोनिष्विति । स्वयं कृतासु

---

'शाच्छन्दसोर्यंहुल' मितिसूत्रेण छान्दसः । शतं चैकाचेति । एकोत्तरशतमित्यर्थः । हृदयस्थदव्रोलकस्य एका सुषुम्नाख्या मूर्धानं गता विष्वक् नाना गतयस्तिर्यगूर्ध्वगा अन्या नाड्यः उत्क्रमणे प्राणोत्क्रमणद्वारभूताः संसारागमनहेतुभूता भवन्तीत्यर्थ. ॥ ५ ॥ १८ ॥

उदरस्थं हृदयस्थं च भगवन्तं मुनय उपासते इत्युक्ते भगवतो हृदयाद्युपाधिप्रवेशेनोपाधितारतम्यप्रयुक्ताल्पत्वमहत्त्वभावप्राप्त्या जीवसाम्यमाशङ्क्य जीवोऽपि यान्त करणप्रतिबिम्बितः परिच्छिन्नः प्रतिशरीरं भिन्न उदरादिषु वर्तते ईश्वरस्तूपाधिपरिच्छेदशून्य एकः सर्वव्यापित्वादिरूपेणेति प्रतिबिम्बेन जीवेन बिम्बभूतः

अथ वितथास्वमूष्ववितथं तव धाम समं
विरजधियोऽन्वयन्त्यभिविपण्यव एकरसम् ॥६॥१९

---

उच्चनीचमध्यमासु योनिषु अभिव्यक्तिस्थानेषु कार्येषु देहादिषु हेतुतया उपादानतया प्रागेव विद्यमानत्वेन मुख्यप्रवेशासंभवाद्विशन्निव वर्तमानस्तरतमतो न्यूनाधिकभावेन चकास्सि अवभाससे । स्वकृता योनीरनुकरोतीति स्वकृतानुकृतिः । अनलवत् अग्निर्यथा स्वतस्तारतम्यहीनोऽपि काष्ठानुसारेण तथातथा प्रकाशते तद्वत् । अथ अतो वितथासु मिथ्याभूतास्वमूषु योनिषु । अवितथं सत्यम् । यतः सममविशेषं अतः सत्यं तव धाम स्वरूपं विरजधियो

---

स्वनियन्तोपास्य इत्याशयेन समाधत्ते—नन्वित्यादिना । एक इति । उदराद्युपाधिभेदेन भेदो नेत्यर्थः । अतो देवः सर्वोपास्य इत्यर्थः । दुर्लभत्वं वारयति—**सर्वभूतेष्विति** । तर्हि सर्वेषां प्रत्यक्षः कुतो न तत्राह—**गूढ इति** । घनच्छन्नदृष्टीनां सूर्य इव मायावृतमतीनां न भासत इत्यर्थः । एकस्य कथं सर्वभूतस्थत्वं तत्राह—**सर्वव्यापीति** । आकाशवदिति भावः । सर्वभूतान्तःस्थितिप्रयोजनमाह—**सर्वभूतानामन्तरात्मेति** । कर्माध्यक्षः कर्मकारयिता कर्मफलप्रदाता च । सर्वभूतानामधिवासोऽधिष्ठानम् । ननु प्रकृतेरिव जडतया सर्वाधिष्ठानत्वे कर्माध्यक्षत्वमनुपपन्नं तत्राह—**साक्षीति** । ननु साक्षाद्द्रष्टा च दर्शनाश्रय इति स्वतो जडत्वं तार्किकोक्तरीत्या प्रसज्यते तत्राह—**चेता इति** । ज्ञानस्वरूप इत्यर्थः । केवलः अद्वितीय इति साक्षित्वोक्त्या प्रसक्तसाक्षिसाक्ष्यरूपभेदनिरासः । एको देव इत्याद्युक्त्या प्रसक्तमेकत्वादिधर्माश्रयत्वं वारयति **निर्गुणश्चेति** । **विशन्निव वर्तमान इति** । अन्तःकरणादिषु प्रतिबिम्बिततया जीवरूपेण वर्तमानोऽत एव न्यूनाधिकभावेनाजगजादिपूपाधितारतम्यकृतप्रतिबिम्बापरनत्यमहत्त्वादिना चकास्सीत्यर्थः । **सत्यं तव धाम स्वरूपमिति** । 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इत्याद्यन्तर्यामिब्राह्मणोक्तं नियन्तृरूपं बिम्बात्मकमित्यर्थः ।

स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं
तव पुरुषं वदन्त्यखिलशक्तिधृतोंऽशकृतम् ।

निर्मलमतयः अन्वयन्ति जानन्ति । नु इति पृथक्पदं वा । अत्र हेतुः—अभिविपण्यव इति । अभितो विगतव्यवहाराः । पण व्यवहार इत्यस्य रूपं पण्युरिति । ऐहिकामुष्मिककर्मफलरहिता इत्यर्थः । अविशेषत्वादेवैकरसं सन्मात्रम् । अवस्तवोपाधिकृततारतम्याभावादप्रच्युतैश्वर्यस्योपास्यत्वमिति भावः ॥ ६ ॥ १९ ॥

स्वनिर्मितेषु कार्येण तारतम्यविवर्जितम् ।
सर्वानुस्यूतसन्मात्रं भगवन्तं भजामहे ॥ ६ ॥

अपिच कुतोऽन्वियमाशङ्का स्यात् भगवतो देहाद्युपाधिकृतदोषप्रसङ्ग इति । यतोऽविद्याकामकर्मभिः संसरतो जीवस्यापि भगवद्रूपं लक्षणया बोधयन्त्यस्तं दोषं निषेधयन्ति 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः तत्त्वमसी' त्याद्याः श्रुतयः । ननु कस्यचित्स्यात्मनः स्तुतिरियमीश्वरत्वेन क्रियते नतु तस्येश्वरत्वं बोध्यते । नैतद्युज्यते । यतस्तत्र 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।

---

इत्यस्येति । पण व्यवहारे पन चेति पठितस्येत्यर्थः । रूपं पण्युरिति । पणेर्बाहुलकादौणादिको युप्रत्ययः । अनुनासिकप्रतिज्ञाया अभावादनादेशाभावः ॥ ६ ॥ १९ ॥

इदानीं भारतीतीर्थादिसंमतं प्रतिबिम्बमिथ्यात्वपक्षमनादृत्य प्रतिबिम्बो बिम्बादनितरत्वाद्बिम्बात्मना सत्यः बिम्बभेदादिधर्मा एवाध्यस्ता नत्वत्र धर्म्यध्यास इति विवरणादिसिद्धान्तेन जीवे एवोपाधिकृता दोषाः वस्तुतो न सन्ति किमुत बिम्बभूतेश्वर इति दर्शयितुमाह—अपीति । यश्चायं पुरुषे देहे प्रत्यगात्मा यश्चासावादित्ये सूर्यमण्डले उपास्यत्वेनोक्तः परमेश्वरः स एकः । तत्त्वमसीतिवाक्यार्थं उक्तः ।

इति नृगतिं विविच्य कवयो निगमावपनं
भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिताः ॥७॥२०॥

---

तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इत्याद्याः श्रुतयः कृतावतारस्य भगवतश्चरणभजनमुपायं वदन्तीत्याह—स्वकृतपुरेष्विति । स्वकर्मोपार्जितेषु पुरेषु देहेषु अमीषु नरादिषु भोक्तृत्वेन वर्तमानं पुरुषमखिलशक्तिधृतः सर्वशक्त्याश्रयस्य पूर्णस्य तवांशकृतं वदन्ति । अंशइवांशः कृतइव कृतः । तद्रूपं वदन्तीत्यर्थः । ननु कार्यकारणसंधृतस्य कुत एवंभूतत्वं तत्राह—अबहिरन्तरसंवरणमिति । बहिः कार्यमन्तरं कारणं वस्तुतस्तदावरणशून्यम् । तयोरसत्त्वादित्यर्थः । इत्येवं नृगतिं नुर्जीवस्य गतिं तत्त्वं विविच्य विशोध्य कवयः अन्यथेदं न प्राप्यत इति जानन्तः निगमावपनं निगमोक्तकर्मणामावपनमासमन्तादुप्यतेऽस्मिन्नित्यावपनं क्षेत्रं सर्वकर्मार्पणविषयमित्यर्थः । यत्रार्पितानि कर्माणि मुक्तिफलं फलन्ति तं भवतोऽङ्घ्रिमभवं भवनिवर्तकं विश्वसिताः कृतविश्वासाः उपासते अर्चनवन्दनादिभिः सेवन्ते । भुवीति मर्त्यलोके इदमेवोचितमिति दर्शयन्ति ॥२०॥

त्वदंशस्य ममेशान त्वन्मायाकृतबन्धनम् ।
त्वदङ्घ्रिसेवामादिश्य परानन्द निवर्तय ॥ ७ ॥

---

तस्य महात्मनो महानुभावस्य भक्तस्य एते अस्यां श्वेताश्वतरोपनिषदि कथिता अर्था जीवब्रह्मैक्यादयः प्रकाशन्ते यथावत्साक्षात्कृता भवन्ति नान्यस्य । हि यस्मादेवं तस्माद्ब्रह्मज्ञानेच्छुभिरीश्वरगुरुविषया भक्तिः संपाद्येति भावः । कृता भवस्यावतारा येनेति तद्गुणसंविज्ञानो बहुव्रीहिः । अवतारस्यावतारिणश्च भगवतश्चरणभजनं ब्रह्मात्मैक्यज्ञानोपायं वदन्तीत्यर्थः । जीवे ब्रह्माभेदोक्तेः । श्रुतिरूपत्वे तद्भेदज्ञानार्थमुपायोक्तिर्न संगच्छेत 'आदित्यो यूपो यजमानः प्रस्तर' इत्यादिकायां श्रुतावप्यात्मभेदोक्त्युपायोक्तेरभावादिति भावः । अन्यथा चरणभक्तिं विना इदं साक्षात्काररूपं ब्रह्मज्ञानं न प्राप्यते । विश्वसिता इति विश्वासार्थकधातोरूपं—मर्ध-

दुरवगमात्मतत्त्वनिगमाय तवात्ततनो-
श्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ।
न परिलषन्ति केचिदपवर्गमपीश्वर ते
चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥ ८ ॥ २१ ॥

---

'भक्तिरल्पसाधन'मिति वचनमनुचितमिव मन्वानो भक्तिं गुरूकरोति—दुरवगमेति । भो ईश्वर, दुरवगमं दुर्बोधं यदात्मतत्त्वं तस्य निगमाय ज्ञापनाय तवात्ततनोराविष्कृतमूर्तेः चरितमहामृताब्धिपरिवर्तपरिश्रमणाः चरितमेव महामृताब्धिः तस्मिन्परिवर्तो विगाहः तेन परिश्रमणाः । परिवर्जनार्थः श्रमणं श्रमः । गतश्रमा इत्यर्थः । अपवर्गमपि केचिन्न परिलषन्ति नेच्छन्ति कुतोऽन्यदिन्द्रपदादि । केचिदिति एवंभूता भक्तिरसिका विरला इति दर्शयन्ति ।

---

नयनन्दनादीति । एतेन पुन पुनर्ब्रह्माकारा वृत्तिरेव भक्तिर्नतु भगवदर्चनादिरूपा भक्तिरपेक्षितेति निरस्तम् ॥ ७ ॥ २० ॥

अल्पसाधनमिति । तत्त्वज्ञानादेः केवलं साधनमेव नतु परमफलरूपमपीति पूर्वश्लोकस्थतत्त्वज्ञानसाधनत्वोक्त्या सिद्धान्तीकरणमनुचितमित्यर्थ । साधनान्तरवत् मोक्षकाले हेयत्वापत्त्या वक्ष्यमाणश्रुतिभाष्याभ्यां शुकसनकाद्याचारैश्च विरोधापत्तेरिति भाव. । मन्वानः पर्यालोचयमान श्रुतिगणो भक्तिं गुरूकरोति । मोक्षोपरि विराजमानपञ्चमपुरुषार्थरूपत्व स्थापयतीत्यर्थ । भक्तिरल्पसाधनमिति पाठे अल्पस्य तत्त्वज्ञानमात्रस्य साधनमेवेति वचनस्यानौचित्यं मत्वा गुरू करोति । धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयस्यापि साधनत्वं मोक्षाधिकपञ्चमपुरुषार्थरूपत्व च स्थापयतीत्यर्थ । महानमृताब्धिरिति । यदि कश्चिदमृताब्धिर्महान्स्यात्तदोपमीयेतेत्यर्थ । श्लेषेणामृताना सायुज्यादिमोक्षाणा समुद्रतुल्ये । इन्द्रपदादीति । इन्द्रपदशब्देन अर्थकामौ । आदिपदाद्धर्म । तथाच चतुर्वर्गमपि भक्तिवशादेव बलात्प्राप्तमपि नेच्छन्ति । अनेन भक्तेः पुरुषार्थचतुष्टयसाधनत्वं स्वत परमफलरूपत्वं च व्यञ्जितम् । श्रवणकीर्तने इति । स्मरणपादसेवनार्चनादीनामुपलक्षणमेत-

न केवलमन्यन्नेच्छन्ति किंतु तेनैव सुखेन पूर्णाः सन्तः पूर्वसिद्धं गृहादिसुखमप्युपेक्षन्त इत्याह—तव चरणसरोजहंसकुलसङ्गविसृष्टगृहा इति। तव चरणसरोजे हंसा इव रममाणा ये भक्तास्तेषां कुलं तेन सङ्गस्तेन विसृष्टा गृहा यैस्ते तथा। अनेन श्रवणकीर्तने

---

दिति भावः। श्रुतिश्चेति। नृसिंहतापिनीश्रुतिरित्यर्थः। देवा विषयिणः। ब्रह्मवादिनो मुक्ताः। इति विषयिमुमुक्षुमुक्तसेव्यत्वम्। ननु ब्रह्मवादिपदं वेदपाठकवाचकं न मुक्तपरमित्याशङ्कायामाह—व्याख्यातं चेति। सर्वज्ञैर्भक्तिमाहात्म्यमपि श्रुतिविद्वदनुभवसिद्धं जानद्भिर्भाष्यकृद्भिः श्रीमच्छंकराचार्यैः। भाष्यार्थस्तु—मुक्ता जीवन्मुक्ताः। अपीति श्रुतिस्थचकारार्थः। अपिना भक्तिसाध्यफलापेक्षाशून्या अपीति सूचितम्। लीलया भजन्तीति स्वभावोक्त्या 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति विरोधो निरस्तः। विग्रहं कृत्वेति भगवतश्चतुर्भुजपीताम्बरधारिमूर्तिमन्तर्मनोमयीं बहिर्वा धात्वादिमयीं कृत्वेति साकारभजनमुक्तम्। नमन्तीति वर्तमानप्रत्ययेन स्वभावव्यञ्जनाद्भक्तेरसाधारणज्ञानिचिह्नत्वं ध्वनितम्। यद्वा लीलया हेतुना नतु बद्धजीववत् कर्महेतुना विग्रहं कृत्वा स्वयमेव देहं धृत्वा सायुज्यादिमुक्तिमनादृत्य भजन्तीति। अत्र पक्षे अकर्मजन्यलीलाविग्रहधारिमुक्तेषु भजनोक्त्या कर्मजन्यदेहधारिजीवन्मुक्तेषु कैमुतिकसिद्धा भक्तिरिति श्रुतौ नमन्तीतिपदं नवविधभजनोपलक्षणपरमित्याशयेन भाष्ये भजन्तीति व्याख्यातमत्र कौस्तुभकृन्नृपितामहैरनन्तदेवैः कृते भक्तिनिर्णयग्रन्थे। ननु मुक्ता भजन्तीत्यत्र मुक्तपदेन ज्ञानिनो वक्तव्याः विदेहकैवल्ये कीर्तनायोगात्। तेषां च न किंचित्कर्तव्यम् 'नैव तस्य कृतेनार्थ' इत्यादिवचनादित्याशङ्क्य विस्तरेण समाहितम्। अयं तत्र समाधानाशयः—'नैव तस्य कृतेनार्थ' इत्यादिवाक्यमदृष्टार्थकर्मविषयम्। दृष्टार्थेषु भोजनादिषु ज्ञानिनोऽपि प्रवर्तन्त एव, कीर्तनादिकं च दृष्टार्थमदृष्टार्थं च, कीर्तनादिभक्तिपराणां रोमाञ्चादिसुखातिशयलिङ्गेन विश्रान्तिहेतुत्वनिश्चयात् ब्रह्मानुभवसुखातिशायिसुखस्य 'आत्मारामाश्च मुनय' इत्यादिवचनोक्तविद्वदनुभवसिद्धत्वाच्च। ततश्च ज्ञानिनां संकीर्तनजन्यादृष्टापेक्षाभावेऽपि कीर्तनादिसुखातिशयार्थमेव तत्र प्रवृत्तिः। अत एव मुक्तमण्डलीमूर्धन्यस्य शुकयोगीन्द्रस्य भागवतसंकीर्तनाय परीक्षिन्निकटे गमनम्। यद्वा 'चतुर्विधा भजन्ते मा'मिति गीतावाक्यस्यार्तादीनामिव ज्ञानिनोऽपि भजनविधायकं, अपूर्वार्थ-

दर्शिते । श्रुतिश्च मुक्तेरप्याधिक्यं भक्तेर्दर्शयति । यथाह—'यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्चे'ति । व्याख्यातं च सर्वज्ञैर्भाष्यकृद्भिः—'मुक्ता अपि लीलया विग्रहं कृत्वा भजन्त' इति ॥ २१॥

त्वत्कथामृतपाथोधौ विहरन्तो महामुदः ।
कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपमम् ॥ ८ ॥

---

त्वेन भजेयुरिति विधित्सीकारात् । 'अधस्तात्समिधं धारयन्ननुद्रवेदुपरि ह देवेभ्यो धारयती' त्यत्रोपरिधारणविधिवत् । अन्यथा आर्तादिषु विधित्वं, ज्ञानिष्वनुवादत्वमिति वैरूप्यापातात् । नच 'नैव तस्य कृतेनार्थ' इत्यादिविरोध इति वाच्यम्, तस्य ज्ञानिस्तुतिमात्रपरत्वादिति । अत्र विधेः फलं तु 'यावज्जीवं त्रयो वन्द्या वेदान्तो गुरुरीश्वरः । आदौ ज्ञानाप्तये पश्चात्कृतघ्नत्वनिवृत्तये' इत्यादिवचनोक्तकृतघ्नत्वादिदोषपरिहार एव । अथवा 'पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः' इत्युक्तेरभजनरूपानादरकृतपाताभावः फलम् ॥ श्रीमधुसूदनस्वामिचरणास्तु गीताटीकादौ प्रतिपादयामासुः—'निष्कामकर्मानुष्ठानं त्यागात्काम्यनिषिद्धयोः । तत्रापि परमो धर्मो जपस्तुत्यादिकं हरेः ॥—१ ततः पापक्षयः २ ततो नित्यानित्यवस्तुविवेकः ३ तत इहामुत्रार्थवैराग्यं ४ ततः शमदमादिसंपत् ५ ततो दृढमुमुक्षा ६ ततो गुरूपसत्तिः ७ ततो महावाक्योपदेशः ८ ततः श्रवणं ९ मननं १० निदिध्यासनं च ११ ततो ब्रह्मसाक्षात्कारः १२ तस्मादज्ञाननाशाद्भ्रमसंशयनाशः प्रारब्धकर्मनाशः क्रियमाणाश्लेषश्च १३ ततो वासनाक्षयार्थं यमादिपञ्चकस्य धारणाध्यानसमाधीनां चानुष्ठानम् १४ ततो वासनाक्षयमनोनाशौ १५ एवं वासनाक्षयमनोनाशतत्त्वज्ञानदार्ढ्ये जीवन्मुक्तिदार्ढ्यं १६ सोऽयं जीवन्मुक्तस्त्रिविधः स्वतो व्युत्थानयुतनिर्विकल्पसमाधिमान् १७ परतो व्युत्थानयुततद्वान् १८ सर्वथा व्युत्थानरहिततद्वांश्चेति १९ एकोनविंशतिरमूर्भूमयो ज्ञानसिद्धिदाः ॥ 'यस्य देवे परा भक्ति-रित्यादिश्रुतिमानतः । सर्वावस्थासु भगवद्भक्तिरत्रोपयुज्यते ॥ पूर्वभूमौ कृता भक्तिरुत्तरां भूमिमानयेत् । अन्यथा विघ्नबाहुल्यात्फलसिद्धिः सुदुर्लभा ॥ एवं प्राग्भूमिसिद्धावप्युत्तरोत्तरभूमये । विधेया भगवद्भक्तिस्तां विना सा न सिध्यति ॥ जीवन्मुक्तिदशायां तु न भक्तेः फलकल्पना । अद्वेष्टृत्वादिवत्तस्य स्वभावो भजनं

हरे ॥ आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरि'रिति ॥ अयमत्राशयः—'अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च' इत्येवमादिगुणा साधकतादशायां साधनरूपेण वर्तमाना जीवन्मुक्तिदशायां लक्षणरूपेणानुवर्तन्त इति तु निर्विवादम् । 'उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः । अयत्नतो भवन्त्यस्य न तु साधनरूपिणः' इत्यादिवचनात् उक्तगीतावचनाच्च । साधकतादशायां महता प्रयत्नेन विद्यमानानामद्वेष्टृत्वमैत्रीकरुणादीनां सिद्धदशायां विनाप्रयत्नं सत्त्वेवेत्यमुपपत्तिः । देहेन्द्रियान्तःकरणजन्यकर्मणामस्ति शक्तिद्वयं एकं संस्कारजनकत्वमपरमपूर्वजनकत्वं चेति सुप्रसिद्धम् । संस्कारमात्रजनकत्वं च लौकिककर्मस्वपि प्रसिद्धं यथा वेष्टनादिक्रियया कटादौ स्थितिस्थापकादिसंस्कारो ज्यत्ति । तथाच साधकतादशायां प्रयत्नेनोऽनुष्ठीयमानानि शान्तितितिक्षामैत्रीकरुणादीनि दृष्टादृष्टोपकारद्वारा तत्त्वसाक्षात्कारं जीवन्मुक्तिदशां चोत्पाद्य देहेन्द्रियान्तःकरणेषु कञ्चन संस्कारमाजनयन्ति । तत्संस्कारवशाच्च प्रयत्नमन्तरेणाप्यद्वेष्टृत्वमैत्र्यादीनि जीवन्मुक्तेष्वनुवर्तन्ते । एवमेव 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्य' मित्येवंप्रकारा भगवद्भक्तिरपि समानतो लक्षणरूपेण जीवन्मुक्तेष्वनुवर्तत इत्यवश्यमभ्युपेयम् । भगवद्भक्तिर्हि निष्कामकर्मानुष्ठानमारभ्योक्तसर्वभूमिकासु जीवन्मुक्तिदशाप्राप्तिपर्यन्तास्वनुष्ठीयमानास्त्यवश्यमनुष्ठीयते तां विना ज्ञानोदयादिभूमिप्राप्त्यभावादित्युक्तं 'श्रेयःसृतिं भक्तिमुदस्य ते विभो' इत्यादिपरं श्रीमद्भागवतादिपुराणवचनेभ्यः । 'यथा ज्ञानं विना मुक्तिर्नास्त्युपायशतैरपि । तथा भक्तिं विना ज्ञानं नास्त्युपायशतैरपी' त्यभियुक्तोक्तेश्च । एवञ्च मूलादारभ्य परतो ध्यानपर्यन्तभूमिकासु सततमनुष्ठीयमाना भक्तिर्भग वत्प्रसादद्वारा तां तां भूमिकामुत्पाद्य सिद्धदशायामपि लक्षणरूपेण वर्तत इति युक्तम् । किंचाद्वेष्टृत्वादितोऽपि भक्त्यनुवृत्तिरवश्यभाविनी, अद्वेष्टृत्वादीनां श्रवणमननाद्यारभ्यानुष्ठीयमानत्वात्, भक्तेस्तु ततोऽपि पूर्वं निष्कामकर्मानुष्ठानमारभ्यानुष्ठीयमानत्वेन तत्संस्कारस्य ततोऽपि दृढतरत्वात् । अतएव चाद्वेष्टृत्वादिनोऽपि भक्तेरसाधारणज्ञानिचिह्नत्वम् । एवञ्च यथाऽद्वेष्टृत्वादिचिह्नाभावे ज्ञानित्वे एव सन्देहस्तथाऽवश्यानुवर्तमानश्रवणकीर्तनादिभगवद्भक्तिरूपासाधारणचिह्नाभावे ज्ञानित्वाभाव एवेति सुधीभिरवश्यं विभावनीयम् । इदं स्वभावतो भक्त्यनुवृत्तिप्रतिपादनं प्रयत्नरहितलक्षणायां चरमभूमिकायामेव । पूर्वं तु ध्यानपद्भूमिकासु चरमभूमिकाप्राप्त्यर्थं दीनानाथकृपालब्धये च प्रयत्न एव भक्त्यनुष्ठानं, 'युयुत्सर्द-

त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियव-
च्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ।
न बत रमन्त्यहो असदुपासनयाऽऽत्महनो
यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥ ९ ॥ २२ ॥

---

'आराममस्य पश्यन्ति न तं पश्यति कश्चन' । 'न तं विदाथ य इमा जजानाऽन्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ती' त्याद्याः श्रुतयोऽनुक्रोशन्त्यो जगदात्मनीश्वरे रतिमुपदिशन्तीत्याह—त्वदनुपथमिति । त्वदनुवर्तित्वात्त्वत्सेवौपयिकमिदं कुलायं कौ पृथिव्यां लीयत इति कुलायं शरीरम् । आत्मसुहृत्प्रियवत् आत्मा च सुहृच्च प्रियश्च तद्वच्चरति । स्वाधीनतया वर्तत इत्यर्थः । तथापि त्वयि उन्मुखे हिते प्रिये आत्मनि च । अन्यर्थे चकारः । एवंभूते सुसेव्येऽपि त्वयि बत अहो कष्टं

---

त्तुकी' मित्यादौ कृञ्धातुना प्रयत्नोक्तेरिति । अत्रार्थे सूतसंहितावचनानि—'विष्णुरुद्रानमुत्पन्नं यस्य तस्य महात्मनः । शिवरुद्रमहादेवब्रह्मेशानादिनामसु ॥ शिवस्य लिङ्गपूजायां शिवस्थानेषु सुव्रताः । प्रियबुद्धिः प्रजायेत स्वभावादेव सर्वदा ॥ यस्य विज्ञानिनस्तेषु प्रद्वेषो वापि जायते । उपेक्षा वा न [illegible] ज्ञानी पशुर्विज्ञानवञ्चकः ॥ बाधितोकारतो (?) वापि यस्य बुद्धिः स्वतो नहि । एष्वसौ नैव विज्ञानी भ्रान्त एव न संशय' इत्यादीन्यलमतिविस्तरैः ॥ ८ ॥

कर्माचरणविरागौ मूगी अपि यैर्न सम्यगारूढाः ।
प्रलपन्ति वयं ज्ञानिन ईशं न भजाम नतितविस्तेभ्यः ॥ २१ ॥

**आराममिति** । अस्य परमात्मनः आरामं उपवनं क्रीडास्थानं ग्रामनगरादि विश्वं सर्वे पश्यन्ति । तं आरामनिर्मातारं परमात्मानं कश्चन कोऽपि न पश्यति । **न तमिति** । यूयं तं न विदाथ न जानीथ य इमाः प्रजा जजान जनयति स्म । अतो युष्माकं तस्य च अन्यत् महत् व्यवधानं बभूव । यतो भवन्तो नीहारेणा-

निभृतमरुन्मनोक्षदृढयोगयुजो हृदि य-
न्मुनय उपासते तदरयोऽपि ययुः स्मरणात् ।
स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो
वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः ॥१०॥२३॥

---

न रमन्ति न सख्यादिना भजन्ति । असदुपासनया देहाद्युपलालनेन । आत्महनः प्रमादिनः । कुतः । यदनुशयाः यस्यामसदुपासनायामनुशयो वासना येषां ते कुशरीरभृतः सन्तः उरुभये संसारे भ्रमन्ति परिवर्तन्ते अत आत्महन इति भावः ॥ ९ ॥ २२ ॥

त्वय्यात्मनि जगन्नाथे मन्मनो रमतामिह ।
कदा ममेदृशं जन्म मानुषं संभविष्यति ॥ ९ ॥

इदानीं 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्याद्याः श्रुतयो ध्यानमङ्गत्वेनोपदिशन्तीत्याह—निभृतमरुन्मनोक्षदृढयोगयुज इति । मरुत्प्राणः मनश्च अक्षाणीन्द्रियाणि च

---

ऽविचया प्राकृता अवगुण्ठिताः जल्प्याः प्रजल्पनपराः । तार्किका इत्यर्थः । अतएव पाशुरूपाः प्राणतर्पणपरायणाः उक्थानां शासितारः यज्ञ्यानस्थे चरन्ति संसरन्तीत्यर्थः । अनुक्रोशन्त्यः कृपयोपदिशन्त्यः । रमन्तीति परस्मैपदमार्षम् ॥९॥२२

आत्मा वाऽरे इति । वै निश्चये । अरे मैत्रेयि, आत्मा द्रष्टव्यः साक्षात्कर्तव्यः । अत्र ज्ञाने विध्यसंभवात् द्रष्टव्य इत्यनूद्य श्रवणादिसाधनानि विधीयन्ते आत्मदर्शनफलाय श्रवणादिकर्तव्यमिति । तानि साधनान्याह—श्रोतव्य इति । उपक्रमादितात्पर्यलिङ्गविचार एव धारयितव्यः । मन्तव्यः अनुकूलतर्कैरसंभावनाविपरीतभावनानिवृत्तये स्वयं मुहुर्विचारणीयः । निदिध्यासितव्यः निश्चयेन ध्यातव्यः । अत्रात्मपदं साकारनिराकारब्रह्मसाधारणमिति टीकाशयः । येनारीणां नारीणां च साकारध्यानमहिमप्रदर्शनपरमूलैकवाक्यता । 'चरणस्मरणं प्रेम्णा तव देव सुदुर्लभम्'मिति तात्पर्यसंग्राहकसाकारविषयकश्लोकसंगतिश्च स्पष्टा । ध्यानमङ्गत्वेनेति । साकारध्यानमपि ध्यातृमनोऽनुसारेण साकारस्य निराकारस्य

क इह नु वेद बतावरजन्मलयोऽग्रसरं
यत उदगादृषिर्यमनु देवगणा उभये ।

निभृतानि संयमितानि यैस्ते च ते दृढं योगं युञ्जन्ति ते दृढयोगयुजस्ते तथाभूता मुनयो हृदि यत्तत्त्वमुपासते तदेवारयोऽपि तव स्मरणाद्ययुः प्रापुः । स्त्रियोऽपि कामतः उरगेन्द्रभोगभुजदण्डविषक्तधियः अहीन्द्रदेहसदृशयोर्भुजदण्डयोर्विषक्ता धीर्यासां ताः परिच्छिन्नदृष्टयः समदृशः सममपरिच्छिन्नं त्वां पश्यन्त्यो वयं श्रुत्यभिमानिन्यो देवता अपि ते समा एव कृपाविषयतया अङ्घ्रिसरोजसुधाः अङ्घ्रिसरोजं सुष्ठु धारयन्त्यः । अयं भावः—इत्थंभूतस्तव स्मरणानुभावः—ये योगिनस्त्वा हृद्यालम्बनमुपासते, याश्च वयं त्वा समं पश्यामः, याश्च स्त्रियः कामतः परिच्छिन्नं ध्यायन्ति, ये च द्वेषेण, सर्वानपि तांस्त्वामेव प्रापयतीति ॥ १० ॥ २३ ॥

चरणस्मरणं प्रेम्णा तव देव सुदुर्लभम् ।
यथाकथंचिन्नृहरे मम भूयादहर्निशम् ॥ १० ॥

'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' 'को अद्धा वेद क

---

था ब्रह्मणो दर्शनसाधनत्वेनोपदिशन्तीत्यर्थ । मुनयो हृदि यत्तत्त्वमिति । 'मौनेन विप्रासे'दि त्यादिश्रुत्युक्तमननशीलत्वादपरिच्छिन्नदृष्टयो यद्ब्रह्माख्य तत्स्वरूप त्वामुपासते तदेवारयोऽपि साकारस्य तव स्मरणप्रभावाद्ययुरित्यर्थ । उपासते ययुरिति वर्तमानभूतप्रत्ययाभ्या मुनय उपासीना एव वर्तन्ते तेषा तत्प्राप्तित. पूर्वमेवारयस्तत्प्रापुरिति व्यज्यते । एकमाश्चर्यमुक्त्वाश्चर्यान्तरमाह —स्त्रिय इति । स्त्रियोऽपीत्यपिरध्याह्रियते । कृपाविषयतया समा जाता इति शेष । अङ्घ्रिसरोजमिति । चरणधारणाख्यामपि श्रुतीनामपरिच्छिन्नत्वानुसधानमिति भाव. ॥१०॥२३

ननु यत्स्मरणानुभाव एवभूत कीदृशं तद्भगवत्तत्त्वमित्याकाङ्क्षाया तस्य दुर्ज्ञेयत्वादल जिज्ञासया भक्तिरेव श्रेयसीत्याशयेनावतारयति—यतो वाच इत्यादि ।

तर्हि न सन्न चाऽसदुभयं नच कालजवः
किमपि न तत्र शास्त्रमवकृष्य शयीत यदा ॥११॥२४॥

इह प्रवोचत्कुत आजाता कुत इयं विसृष्टिः । अर्वाग्देवा अस्य विसर्जनेनाऽथा को वेद यत आबभूव' 'अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्शत् । तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाती'त्याद्याः श्रुतयो भगवत्तत्त्वं दुर्ज्ञेयं वदन्त्यो भक्तिमेवोरीकृत्य स्तुवन्तीत्याह—क इह नु वेदेति । बत अहो भगवन्, इह जगति अग्रसरं पूर्वसिद्धं त्वां अवरजन्मलयः अर्वाचीनोत्पत्तिनाशवान् को नु पुमान्वेद जानाति । ईश्वरस्य पूर्वसिद्धावन्यस्य चार्वाचीनत्वे प्रमाणं वदन् ज्ञानकारणाभावमाह—यत उदगादिति । यतस्त्वत्तः ऋषिर्ब्रह्मा उदगादुत्पन्नः, यं ब्रह्माणमनु उभये आध्यात्मिकाधिदैविका देवगणा उत्पन्नाः, ततोऽप्यर्वाचीनाः सर्वे । यदा तु भवान् सर्वमवकृष्य उपसंहृत्य शयीत तर्हि तदा अनुशायिनां जीवानां ज्ञानसाधनं नास्ति । यतस्तदा न सत् स्थूलमाका-

---

यस्माभिर्विकल्पाद्वयानन्दान्मनोवाचोऽभिधायकशब्दास्तादृशब्रह्मबोधनाय प्रयुज्यमाना अपि अप्राप्य शक्तिवृत्त्या अप्रकाश्यैव निवर्तन्ते । मनसा सहेति । मनोवृत्तिरपि न तत्प्रकाशयतीत्यर्थः । **को अद्धेति** । इयं विसृष्टिराकाशादिसृष्टिः कुतः कस्माज्जाता, कुतः कस्माद्धेतोः स्थितिं प्राप्ता, एतदद्धा प्रत्यक्षतः को वेद । न कोऽपीत्यर्थः । इह संसारमण्डले कः प्रवोचत् प्रावोचत् । कोऽपि प्रवक्ता न बभूवेत्यर्थः । ननु ब्रह्मादिदेवा ज्ञास्यन्ति तत्राह—**अर्वागिति** । अस्य विसर्जनेन एतत्सृष्टत्वेन ब्रह्मादिदेवा अपि अर्वाचीना एवेत्यर्थः । 'यो ब्रह्माणं विदधाति पूर्व'मिति श्रुतेः । अथ तस्मादियं विसृष्टिर्यत आबभूव तं को वेद । न कोऽपीत्यर्थः । अनिर्वचनीयैव सृष्टिरिति भावः । **अनेजदिति** । एकमद्वितीयं एजनं कम्पनं स्वस्थानाच्च्यवनं तद्रहितमपि मनसो जवीयो वेगवत्तरं विभुत्वादि-

जनिमसतः सतो मृतिमुतात्मनि ये च भिदां
विपणमृतं स्मरन्त्युपदिशन्ति त आरुपितैः।

शादि, नचाऽसत् सूक्ष्मं महदादि, नच उभयं सदसद्भ्यामारब्धं शरीरम्, नच कालजवः तन्निमित्तभूतं कालवैषम्यम्। एवं सति तत्र तदा न किमपि इन्द्रियप्राणाद्यपि। नच ज्ञापकं शास्त्रमपि। अयमभिप्रायः—अर्वाक्सृष्टिगतानां देहाद्युपाधिकृतान्तराणां कालवशेन च मलिनसत्वानां न तावद्भगवज्ज्ञानसामर्थ्यम्। तथा च श्रुतिः—'न तं विदाथ य इमा जजानाऽन्यद्युष्माकमन्तरं बभूव' इत्याद्या। यदा तु प्रलयसमये न वह्वन्तरमस्ति तदाऽपि साधनाभावात् न भगवज्ज्ञानसामर्थ्यम्, अतस्त्वदेकशरणतया श्रवणकीर्तनादिभक्तिरेव सुकरेति॥ ११॥ २४॥

काहं बुद्ध्यादिसंरुद्धः क्व च भूमन्महस्तव।
दीनबन्धो दयासिन्धो भक्तिं मे नृहरे दिश॥ ११॥

इतोऽपि ज्ञानं न सुशकम्, उपदिशतापि भ्रमबाहुल्यादित्याहुः—जनिमसत इति। असतो जगतो जनिमुत्पत्तिं ये वैशेषिकादयो

---

र्थः। एतत् आत्मतत्त्वं देवा इन्द्रियाणि नाप्नुवन्। यतः पूर्वमर्शत् पूर्वमेव गतं सर्वान्तरतया स्थितं नतु पराग्भूतमित्यर्थः। इन्द्रियाणि परागवस्तुविषयाणि न प्रत्यग्विषयाणीति भावः। तिष्ठत् स्थिरमपि तत् शीघ्रगतिमतोऽन्यानत्येति अतिक्रम्य वर्तते। तस्मिन्परमात्मचैतन्ये सति तदाश्रयत्वेन वर्तमानो मातरिश्वा वायुः अपः उदकप्रवाहवत्सततं वर्तमानाः सर्वेषां सर्वचेष्टा दधाति संपादयति। न तं विदाथेति व्याख्याता॥ ११॥ २४॥

असतः उत्पत्तेः प्रागविद्यमानस्य जगतः। वैशेषिकाः काणादाः। सप्तपदार्थवादिनो नवीनास्तार्किकाः। एते ह्येवमाहुः—उत्पत्तेः पूर्वं कार्यमात्रस्य प्रागभावोऽस्ति सच तत्तत्प्रागभावस्तत्तत्कार्ये निमित्तकारणम्, उत्पन्ने कार्ये प्रागभावनाशः,

त्रिगुणमयः पुमानिति भिदा यदबोधकृता
त्वयि न ततः परत्र स भवेदवबोधरसे ॥ १२ ॥ २५ ॥

वदन्ति, असत एव ब्रह्मत्वस्योत्पत्तिं ये च पातञ्जलादयः, सत एवैकविंशतिप्रकारस्य दुःखस्य नाशं मोक्षं वदन्ति ये नैयायिकाः,

---

संस्थानादित्वे सति सान्तरत्वादिति । सांख्यवेदान्तिनौ तु सत्कार्यवादिनौ उत्पत्तेः पूर्वं कारणे सूक्ष्मरूपेण सदेव कार्यं कुलालादिकारकव्यापारेण व्यक्तीक्रियते । प्रागभावस्य न कारणता अभावाद्भावोत्पत्तेरसंभवात् 'नासतो विद्यते भाव' इत्यादिवचनादिति तयोराशयः । पातञ्जला योगशास्त्रप्रणेतारः जीवरूपं सत्त्वं नत्वौपाधिकं यथा ताम्रादिरसुवर्णरूप एव सद्यौषधिपुटपाकादिप्रभावात्सुवर्णं भवति एवमब्रह्मभूतो जीवो योगप्रभावाद्ब्रह्म भवतीति योगशास्त्राशयः । वेदान्तिनस्तु जीवः सर्वदा ब्रह्मरूप एवास्ति । अज्ञानेन स्वस्याब्रह्मरूपत्वं मत्वा संसरति । यथा कश्चन राजपुत्रो राज्ञा वने त्यक्तो व्याधैः संवर्धितो व्याध एवाहमिति राजत्वाज्ञानान्मन्यते स । स च केनचित् न त्वं व्याधः किंत्वमुकराष्ट्राधिपो राजा त्वमसीत्यादिनोपदिष्टोऽज्ञानकृतव्याधत्वं विहाय राजत्वं ज्ञात्वा राजा भवति तद्वदिति वदन्ति । **एकविंशतिप्रकारस्येति** । षडिन्द्रियाणि षड्विषयाः षडिन्द्रियजन्यज्ञानषट्कं शरीरं सुखं दुःखं चेत्येकविंशतिविधं दुःखम् । वैषयिकसुखस्यापि नाशादिज्ञानेन दुःखसंबन्धित्वात् दुःखत्वम् । एवं शरीरेन्द्रियादीनामपि दुःखनिदानत्वादिना दुःखत्वम् । एवमेतस्यैकविंशतिविधदुःखस्य सत्यस्यैव ज्ञानान्नाशो मोक्षः । तथा च गौतमसूत्रम्—'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग' इति । उत्तरोत्तरापाये मिथ्याज्ञानादिनाशे तदनन्तरस्य तत्पूर्वपूर्वस्य दोषादेरभावान्मुक्तिरिति सूत्रार्थः । तथाचायं क्रमः—सर्वपदार्थतत्त्वज्ञाने सर्वपदार्थविविक्तात्मतत्त्वज्ञानान्मिथ्याज्ञाननाशः । तेन दोषाणां रागादीनां नाशः । प्रवृत्तिहेतुरागाद्यभावे प्रवृत्तेर्धर्मादिरूपाया अनुत्पत्तिः । तदनुत्पादे च देहान्तरसंबन्धरूपजन्माभावः । भोगेन प्रारब्धक्षयः । ज्ञानेन सञ्चितक्षयः । एवं भाविजन्माभावे वर्तमानदेहपाते एकविंशतिदुःखध्वंसो मोक्षः । मोक्षस्य दुःखाभावरूपत्वेनैव पुरुषार्थत्वं नतु सुखरूपत्वेनापि नित्यसुखाभावादिति प्राचीनतार्किकाः षोडशपदार्थवादिनो वदन्तीत्यर्थः ॥ अद्वैतवादिनस्तु ज्ञानैकनिवर्त्यस्य क्वापि सत्यत्वादर्शनात् 'नान्यः पन्था विद्यतेऽयनाये'त्यादिश्रुतौ ज्ञानैकनिवर्त्यत्वेन श्रुत एकविंशतिदुःखात्मा

उत अपिच ये सांख्यादयः आत्मनि भिदां भेदं च, ये मीमांसकाः विपणं कर्मफलव्यवहारभूतं सत्यं स्मरन्ति वदन्ति ते सर्वे आरुपितैः आरोपितैर्भ्रमैरेवोपदिशन्ति न तत्त्वदृष्ट्या, 'सदेव सोम्येदमग्र आसीत्' 'ब्रह्मैव सन्ब्रह्माप्येति' 'अनीशया शोचति मुह्यमानः' 'अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः ।

---

संसारो न सत्य किंतु रज्जुसर्पादिवन्मिथ्यैवेति कल्पितस्यैव दु खात्मकसंसारस्य ज्ञाननाशो मोक्ष इति सिद्धान्तयन्ति—**सांख्यादय इति ।** आदिपदमद्वैतवादिभिन्नसर्वशास्त्रकारसंग्रहार्थम् । वास्तविकात्मनानात्वस्य सर्वमते सत्त्वात् । अद्वैतमते वस्तुत एकएवात्मा जीवात्मपरमात्मभेदजीवजीवभेदादिक चोपाधिकल्पितं घटाकाशमठाकाशादिभेद इवाकाश इति । सत्यमिति नित्यमित्यर्थ । ध्वंसाप्रतियोगीतियावत् । 'अक्षय्य ह वै चातुर्मास्ययाजिन सुकृत भवती'त्यादिश्रुतिबलेन स्वर्गादे कर्मफलस्य नाशास्वीकारात् सृष्टिप्रलयास्वीकाराच्च । एतेषा मीमांसकाना मते तु स्वप्रागभावपरिपालन मोक्ष । यज्ञाद्यकरणे तु खोत्पत्त्या दु ख-प्रागभावनाशो बन्ध । यज्ञादिकरणे नित्यस्वर्गोत्पत्त्या दु खोत्पत्त्यभावे तत्प्रागभावपालनमिति । वेदान्तिमते ब्रह्मातिरिक्तस्य सर्वस्यानित्यत्वमिति । एव पञ्च शास्त्राणा मतान्यनूद्य षष्ठेन वेदान्तशास्त्रेणापि वदति—**ते सर्वे इत्यादिना । सदेवेति ।** इद नामरूपात्मक विकृत जगत् हे सोम्य, अग्रे सृष्टे पूर्व सदेव सद्रूपब्रह्मात्मकमेवासीत् । ननु नासीदित्यसत्कार्यवादिन काणादस्य निरास । **ब्रह्मैवेति ।** य आत्मान पश्यति स ब्रह्मैव सन् ज्ञानात्पूर्व ब्रह्मरूप एव सन् ज्ञानोत्तरकाल शरीरपातोत्तर वा ब्रह्माप्येति प्राप्नोतीति योगशास्त्रनिरास । **अनीशयेति ।** अनीशा या माया तया मुह्यमान शोचति दु खी भवतीत्यज्ञानकल्पितमेव दु ख न सत्यमिति गौतमीयमतनिरास । मीमांसकमत परिहरति—**अविद्याया मिति ।** धीरा धीमन्तोऽपि अविद्याय'मन्तरे मध्ये वर्तमाना अविद्यावृतज्ञाना अतो मूढा विवेकशून्या. स्वयमात्मानमेव पण्डितमन्यमाना अतो जराजन्ममरणादिदु खव्रातैर्जङ्घन्यमाना भृश पीड्यमाना । हन्तेर्यङ् अभ्यासस्य नुक् 'अभ्यासाच्चे'त्युत्तरखण्डे कुत्व तत क्रमलट शानच् अतोलोपो यलोपश्चेति । परियन्ति परिभ्रमन्ति । अन्धेन नीयमाना अन्धा यथा कूपोदकपातादिक्लेशमात-

जंघन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः' 'एकमेवाद्वितीयं ब्रह्म' 'एक एव हि भूतात्मा भूतेभूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रव' दित्यादिश्रुतिविरोधात् । किंच वस्तुतः पुरुषस्य त्रिगुणमयत्वे सर्वमिदं संगच्छेत नतु तदस्तीत्याह–**त्रिगुणमयः पुमानिति भिदा यदबोधकृता त्वयीति।** त्रिगुणमयः पुमानित्यनेन हेतुना या भिदा । उपलक्षणमेतत् । भिदादि सा यस्मात्त्वयि विषये अबोधकृता त्वद्विषयाज्ञानविजृम्भिता । तर्हि किमज्ञानमस्ति, वस्तुतः पुंसि नैवेत्याह । ततः अबोधात्परत्र परे असङ्गेऽवबोधरसे ज्ञानघने सः अबोधो न भवेत् । न संभवतीत्यर्थः ॥२५॥

मिथ्यातर्कसुकर्कशेरितमहावादान्धकारान्तर-
भ्राम्यन्मन्दमतेरमन्दमहिमंस्त्वज्ज्ञानवर्त्मास्फुटम् ।
श्रीमन्माधव वामन त्रिनयन श्रीशंकर श्रीपते
गोविन्देति मुदा वदन्मधुपते मुक्तः कदा स्यामहम् ॥ १२ ॥

---

मेव प्राप्नुवन्तो भ्रमन्ति तद्वत् । आत्मभेदस्य सर्वमतसिद्धान्तत्वात्तन्मतमन्ते परिहरति—**एकमेवेति** । एकपदेवकाराद्वितीयपदे स्वगतसजातीयविजातीयभेदनिरास । तदुक्तं विद्यारण्यगुरुभि —'वृक्षस्य स्वगतो भेद पत्रपुष्पफलादिभि । वृक्षान्तरात्सजातीयो विजातीय शिलादित ॥ तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते । ऐक्यावधारणाद्वैतप्रतिषेधैस्त्रिभि क्रमा'दित्यादि । **एक एव हि भूतात्मेति** । अत्रापि श्रुतौ एक एव हीति पदत्रयेण भेदत्रयनिरास । भूतात्मा भूततादात्म्यापन्न सन् जरायुजादिचतुर्विधभूतजाते व्यवस्थित विविध नानात्वेनावस्थित अत एकधा एकोपाध्यनुसधाने एकधैव बहूपाध्यनुसधाने बहुधैव च दृश्यते । एवेति इवार्थे । जलचन्द्रवदिति । यथा जलबिम्बितश्चन्द्र एकजले दर्शने एको दृश्यते बहुजलेषु दर्शने बहुधा दृश्यते तद्वदित्यर्थ । आदिपदात् 'तद्यथेह कर्मचितो लोक क्षीयते' इति 'नैषा तर्केण मतिरापनेये'त्यादिश्रुतिसग्रह । **श्रीमन्निति** । सर्वत शोभमान । माधव मधोर्गोत्रापत्येष्ववतीर्ण । त्रिनयनेति श्रीश-

सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात्
सदभिमृशन्त्यशेषमिदमात्मतयाऽऽत्मविदः ।
नहि विकृतिं त्यजन्ति कनकस्य तदात्मतया
स्वकृतमनुप्रविष्टमिदमात्मतयाऽवसितम् ॥ १३ ॥ २६ ॥

ननु यद्यसन्नोत्पद्यते यदि च त्रिगुणमयः पुरुषो न भवति तर्हीदं प्रपञ्चजातं पुरुषश्च पृथङ्नास्तीत्युक्तं स्यात् । कथं तर्हि तयोः सत्त्वेन प्रतीतिरत आह—सदिव मन इति । मनः मनोमात्रविलसितमिदं त्रिवृत् त्रिगुणात्मकं प्रपञ्चजातमसदेव सदिव विभाति । कथमिति-चेत्तत्राह—त्वयीति । त्वय्यधिष्ठाने अधिष्ठानसत्तया सद्वत्प्रतीयत इत्यर्थः । न केवलमिदं्प्रपञ्चजातं किंतु आमनुजात् । मनुजः पुरुषः । अभिविधावाङ्प्रकारः । पुरुषमभिव्याप्येति । पुरुषस्यापि पृथक्सत्त्वप्रतीतिर्मनोमात्रविलसितेत्यर्थः । तथा च श्रुतिः—'असतोऽधि मनोऽसृजत । मनः प्रजापतिमसृजत । प्रजापतिः प्रजा असृजत । तद्वा इदं मनस्येव परमं प्रतिष्ठितं यदिदं किंचे' ति । नन्वात्मविदामपि विश्वं सदेव स्फुरति अतः कथमसत्स्यादत आह—सदभिमृशन्तीति । आत्मविदस्त्वशेषमिदं भोक्तृभोग्यात्मकं विश्वमात्मतयैव सदभिमृश-

---

करोति शिवनामकीर्तनम् । यद्वा त्रयाणां लोकानां लोचनरूपो नायको वा श्रिया लक्ष्म्या भक्तानां च करोतीति तयोः संबुद्धिः । श्रीपते लक्ष्मीकान्त । गोविन्द गोकुलादौ विहारशील । मधुपते मथुरायां द्वारकायां च विराजमान इति मुदा प्रेम्णा वदन् कदा मुक्तः स्याम् । यद्वा मुक्तो मुक्त्युत्तरकालमपि मुदा मोक्षाधिकानन्देन वदन् कदा स्यामिति ॥ १२ ॥ २५ ॥

पृथक् ब्रह्मणिदं नास्तीत्युक्तं स्यात् । तत्र पृथक्सत्ताभावे सत्त्वेन प्रतीतिविरुद्धेत्यर्थः । असतोऽधीति । असतो नामरूपव्याकृतिरहितत्वेन शून्यतुल्यात् ब्रह्मणो निमित्तभूतात् न विद्यते धीर्यस्मात्तदधि मूलाज्ञानं मनो महत्तत्त्वाख्य

**तव परि ये चरन्त्यखिलसत्त्वनिकेततया**
**त उत पदाक्रमन्त्यविगणय्य शिरो निर्ऋतेः ।**
**परिवयसे पशूनिव गिरा विबुधानपि तां-**
**स्त्वयि कृतसौहृदाः खलु पुनन्ति न ये विमुखाः १४॥२७**

---

न्ति सदिति जानन्ति। आत्मकार्यत्वान्न पृथगित्यर्थः। तथाहि यदुपादानकं यत्कार्यं भवति तत्तेनैव रूपेण प्रतीयते उपादीयते चेति लोकाचारेण दर्शयति—नहि विकृतिमिति। कनकस्य विकृतिं कुण्डलादिकं कनकार्थिनो न त्यजन्ति। अत्र हेतुः—तदात्मतया कनकरूपत्वेनेत्यर्थः। अतः स्वकृतमिदं विश्वमनुप्रविष्टं च पुरुषरूपमात्मतयैवावसितं निश्चितम् ॥ १३ ॥ २६ ॥

यत्सत्त्वतः सदा भाति जगदेतदसत्स्वतः ।
सदाभासमसत्यस्मिन्भगवन्तं भजाम तम् ॥ १३ ॥

ननु 'सत्यं ज्ञानमनन्तं ब्रह्म' 'नेह नानास्ति किंचन' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यादिश्रुतिभिरेवंभूतस्य भगवतः

---

समष्टिबुद्धिरसृजत अजायत। अज्ञानमेव समष्टिमनोरूपेण विवर्तितमभूदित्यर्थः। तच्च मनः प्रजापतिं सत्यलोकवासिनं ब्रह्माणमसृजत तस्माद्यदिदं परिदृश्यमानं किंच किंचन तदिदं मनस्येव समष्टिबुद्धावेव परमं यथा स्यात्तथा प्रतिष्ठितं प्रकर्षेण स्थितमित्यर्थः ॥ १३ ॥ २६ ॥

**तव परि ये।** **नेह नानेति।** इह ब्रह्मणि नाना सजातीयादिभेदयुतं किंचन किमपि नास्ति। वस्तुतः कल्पितमेव सर्वं भासत इत्यर्थः। **मृत्योरिति।** इह ब्रह्मणि यः नानेव कल्पितभेदशालि चेतनाचेतनात्मकं विश्वं पश्यति॥ मृत्योरनन्तरं मृत्युं जन्ममरणादिपरम्परारूपं संसारं प्राप्नोतीत्यर्थः। तत् ज्ञानं मन्नज्ञानं सुकरमेव। ज्ञानमात्रान्मोक्षसिद्धेः। कृतं भक्त्या अलं साकारेश्वरभजनेन। मास्तु भगवद्भक्तिरित्यर्थः। एवं हि वेदान्ततात्पर्यानभिज्ञास्तच्छास्त्राभिमानिनो वदन्ति।

प्रतिपादनात् तज्ज्ञानं सुकरमेवेति कृतं भक्त्या अत आह—**तव परि ये चरन्तीति** । तवेति कर्मणि षष्ठी । त्वां ये परिचरन्ति । छन्दसि 'व्यवहिताश्चे' ति यच्छब्देन व्यवधानमदोषः । केन रूपेण । अखिलसत्त्वनिकेततया अखिलानि सत्त्वानि निकेतो यस्य स तथा तस्य भावस्तत्ता तया । सर्वभूतावासतयेत्यर्थः । उत एव । अविगणय्य तिरस्कृत्य तएव निर्ऋतेर्मृत्योः शिरः मूर्धानं पदा पादेन आक्रमन्ति मृत्योर्मूर्ध्नि पदं दधति ते तरन्ति । मुच्यन्त इत्यर्थः । ये पुनर्विमुखाः अभक्तास्तान् गिरा वाचा पशूनिव विबुधान्विदुषोऽपि परिवयसे बध्नासि । कुतः । त्वयि कृतसौहृदाः त्वयि कृतं सौहृदं प्रेम यैस्ते खलु निश्चितं पुनन्ति पवित्रयन्ति । आत्मानमन्यानपीति शेषः । नेतरे । तथाच श्रुतिः—'तस्य वाक्तन्तिर्नामानि दामानि तदस्येदं वाचातन्त्या नाम-

---

अज्ञानकृतः संसारो ज्ञानादेव निवर्तते न तत्र ज्ञानान्यसाधनापेक्षा । नहि रज्जुज्ञानकृतसर्पनिवृत्तिर्ज्ञानातिरिक्तदण्डप्रहारदेवताचिन्तनादिकं साधनमपेक्षते । ज्ञानं च प्रमाणाधीनमिति वेदान्तश्रवणादेव ब्रह्मज्ञानं न तत्र भक्त्यपेक्षा । नहि चक्षुरादेः स्वविषयज्ञानजनने भक्त्यपेक्षा । नवा ज्योतिष्टोमादिवाक्यैः श्रद्धावता स्वार्थधर्मबोधने भक्तिरपेक्ष्यते । नच श्रद्धैव भक्तिरिति वाच्यम् । 'श्रद्धाभक्तिसमन्वित' इत्यादौ भेदेनोक्तेः । नच वेदान्तश्रवणात्परोक्षज्ञानमेव जायते ततस्तदापरोक्ष्याय भक्त्यपेक्षेति वाच्यम् । 'वाक्यश्रवणादेवापरोक्ष्य'मिति विवरणसिद्धान्तात् । शब्दो हि परोक्षवस्तुविषये परोक्षज्ञानं जनयति, सन्निकृष्टप्रत्यक्षार्हवस्तुविषये तु प्रत्यक्षमेव ज्ञानं जनयति । तथाच 'यत्साक्षादपरोक्षाद्ब्रह्मे'ति प्रत्यगभिन्नब्रह्मणोऽतिसन्निकृष्टत्वादपरोक्षत्वाच्चापरोक्षमेव ज्ञानं महावाक्याज्जायते दशमस्त्वमसीत्यादिवाक्यवत् । नहि दशमस्त्वमसीत्युक्ते स्वदशमत्वज्ञाने भक्त्याद्यपेक्षेति । **सर्वभूतावासतयेति** । 'खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् । सरित्समुद्रांश्च हरेः शरीरं यत्किंच भूतं प्रणमेदनन्य' इत्याद्युक्तरीत्येति भावः । इदं श्रवणकीर्तनार्चनादेरुपलक्षणम् । **तस्य वागिति** । वेदरूपा वाक्तन्तिर्महारज्जुः ब्राह्मणादिनामानि तन्तिसंयुक्तदामानीव । यथा दन्त्या दामभिर्दृब्धा

भिर्दामभिः सर्वं सित' मिति। अयमभिप्रायः—सत्यमेवंभूतमात्मानं श्रुतयः प्रतिपादयन्ति । तत्रच यद्यपि वस्तुनोऽपरोक्षत्वादपरोक्षमेव ज्ञानमुत्पद्यते तथाप्यसंभावनाविपरीतभावनातिरस्कृतत्वान्मलिनचित्तेषु परोक्षमिव भवतीति नापरोक्षसंसारभ्रमनिवृत्तिसमर्थम् । भगवत्परिचर्यया तु सम्यगमलचित्तानां तत्प्रसादेन लब्धापरोक्षज्ञानानामयत्नतएव करकलितो मोक्ष इति । तथाच श्रुतयः—'देहान्ते

---

वध्यन्ते एवमीश्वरस्य विधिनिषेधलक्षणया वेदवाण्या तन्तिरूपया दामरूपैर्नामभिरिद् सर्वं जगत् सित बद्धं—ब्राह्मणस्त्वं षट्कर्माणि कुरु, क्षत्रियादिस्त्वं यजनादि त्रयं, ब्रह्मचारी वेदपाठमित्येवमादिना संयतमित्यर्थ । एवभूत प्रत्यगभिन्न सजातीयादिभेदशून्य प्रतिपादयन्तीति सत्यमित्यन्वय । तत्रापरोक्षवस्तुविषयकप्रमाणानामपरोक्षज्ञानजनकत्वनियम वाद्यभिप्रेतमङ्गीकरोति—**यद्यपीत्यादिना ।** भक्त्यनपेक्षा निरस्यति—**तथापीति** । शब्दस्य परोक्षज्ञानजनकत्वस्वभावात् श्रवणकाले परोक्षमेव ज्ञान निदिध्यासनोत्तरमेव मनसा साक्षात्कार इति वाचस्पतिमते श्रवणोत्तरमपि साक्षात्कारार्थं निदिध्यासनाद्यपेक्षावत्सिद्धा भक्त्यपेक्षा । विवरणकारमतेऽप्याह—**असंभावनेति** । अयं तत्र विवरणसिद्धान्तानुसार्याशय —श्रवणकाले उत्पन्नमप्यपरोक्षज्ञानमसंभावनाद्यनन्तदोषै प्रतिबद्धतया नाविद्यानिवर्तनादिकार्यक्षमम् । नह्युत्पन्नोऽप्यग्निर्मणिमन्त्रादिभि• प्रतिबद्धो दाहादिकार्यं जनयति । अत श्रवणकालिक ज्ञानमपरोक्षसञ्ज्ञमपि परोक्षतुल्यमेव भवति । ततश्च अविद्यानिरस्यादिकार्यक्षमसाक्षात्कारप्रतिबन्धकीभूतनानाविधेहजन्मजन्मान्तरदोषप्रतिबन्धनिरासाय भगवद्भक्तिरावश्यकी, भक्तिं विना दोषक्षयलक्षणचित्तशुद्ध्यसम्भवात्, अशुद्धचित्ते भगवत्प्रसादाभावात्, तत्प्रसादाभावे साक्षात्कारस्य खपुष्पायमाणत्वमिति सर्वसिद्धान्तात्, प्रतिबन्धकक्षय विनैव दशमादिवाक्यदृष्टान्तेन चक्षुरादिदृष्टान्तेन वा श्रवणमात्रादविद्यानिवर्तकसाक्षात्काराङ्गीकारे कर्मोपासनापेक्षाभावापत्तिः । तथाच यज्ञादिश्रुतिविरोध सर्वापेक्षाधिकरणविरोधश्च दुर्निवार , सर्वोपनिषत्सूपासनाविधिवाक्यानां पाठवैयर्थ्यापातश्च, साधनमात्रापेक्षाभावापत्त्या शान्त्यादिसाधनविधायकश्रुतिसूत्रविरोधश्चेत्यादि बहु व्याकुलम् । ननु शान्त्यादे साधनत्व 'शान्तो दान्त' इत्यादिश्रुतिबलात्स्वीक्रियते

देवः परं ब्रह्म तारकं व्याचष्टे' 'यमेवैष वृणुते तेन लभ्यः' 'यस्य देवे परा भक्ति' रित्यादयः ॥ १४ ॥ २७ ॥

तपन्तु तापैः प्रपतन्तु पर्वतादटन्तु तीर्थानि पठन्तु चागमान् ।
यजन्तु यागैर्विवदन्तु वादैर्हरिं विना नैव मृतिं तरन्ति ॥ १४ ॥

---

इतिचेत् किं 'यस्य देवे परा भक्ति' रित्यादिश्रुतिदर्शने गाढमन्धोऽसि । अस्या हि श्रुतौ तस्य भक्तिमत एते कथिता अर्था ब्रह्मात्मैक्यादयः प्रकाशन्ते साक्षात्कृता भवन्तीत्यन्वयोक्तौ भक्तिहीनस्य गुरुणा कथिता अप्यर्था न प्रकाशन्त इति व्यतिरेकसिद्धेः स्पष्टत्वात् । ननु तथापि शारीरकसूत्रभाष्यादौ भक्तेः साधनत्वं नाङ्गीकृतमिति चेन्नैवम् । दुराग्रहग्रहग्रस्तप्रज्ञानां तथाभिमानात् । द्वितीयाध्याये हि पाञ्चरात्रागमस्थविरुद्धार्थदूषणाय 'प्रवृत्तेश्च'त्यसम्भवादि'त्यधिकरणे भगवतोऽभिगमनपूजार्थद्रव्यार्जनपूजनाष्टाक्षरादिमन्त्रजपध्यानादिलक्षणमाराधनं नानाधिकरणे प्रतिपिप्यते । श्रुतिस्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वादित्यर्थकभाष्येण स्पष्टं साधनभक्तेरङ्गीकारात्, तथा तृतीयाध्याये द्वितीयपादे 'प्रकृतैतावत्त्वं हि प्रतिषेधती' त्यधिकरणे 'तदव्यक्तमाह ही'ति सूत्रेण ब्रह्म चक्षुरादिकरणैः कृच्छ्रादितपसाऽग्निहोत्रादिकर्मणा व्यक्तं साक्षात्कृतं न भवतीत्युक्ते कथं तर्हि साक्षात्कृतं भवतीति शङ्कोत्तरत्वेन प्रवृत्ते 'अपि संराधने' इत्यादिसूत्रभाष्य—संराधनकाले पश्यन्ति योगिनः । संराधनं भक्तिध्यानप्रणिधानाद्यनुष्ठानमिति । भक्तिर्माहात्म्यज्ञानपूर्वकस्नेहाख्योऽन्तःकरणवृत्तिविशेष इति ब्रह्मविद्याभरणे व्याख्यातम् । अपनमस्कारादिरादिशब्दार्थ इति रामानन्दीयव्याख्यानम् । अत्र भाष्यादौ स्पष्टं भक्तिः प्रतिपाद्यते । एतेन ज्ञानमेव भक्तिरिति केषाञ्चिदुक्तिः परास्ता । ज्ञानपूर्वकः स्नेहाख्य इति पदाभ्यां ब्रह्मविद्याभरणे भक्तिज्ञानयोर्भेदोक्तेः स्पष्टत्वात् जपनमस्कारपदे रामानन्दीयेऽपि स्पष्टतरत्वात् । किञ्च संराधनसूत्रे ब्रह्मात्मैक्यानुसन्धानरूपभक्तिविवक्षणे संराध्यसंराधकभावाभ्युपगमकृता जीवपरमात्मनोर्भेदशङ्का 'प्रकाशादिव'-दित्यादिसूत्रैस्तन्निरसनं च भाष्याद्युक्तं न स्वरसतः सङ्गच्छेतेति द्रष्टव्यम् । तथा गीताभाष्ये 'मन्मना भव मद्भक्त' इत्यत्र भगवद्भक्तेरवश्यंभाविमोक्षफलमवधार्य भगवच्चरणैकपरायणो भवेत्युक्तम् । तथा 'इदं ते नातपस्काय नाभक्ताय कदाचने'तिश्लोके गुरौ देवे च भक्तिरहिताय कदाचन कस्यांचिदवस्थायां न वाच्यमिति

त्वमकरणः स्वराडखिलकारकशक्तिधर-
स्तव वलिमुद्वहन्ति समदन्त्यजयाऽनिमिषाः ।

ननु यद्यखिलसत्वनिकेतत्वेन भगवतः सेव्यत्वमुच्यते तर्हि तत्करणसंबन्धात्कर्तृत्वभोक्तृत्वे प्रसज्येयाताम्, न वस्तुतस्तथात्वमितिचे-

भाष्येण देवगुरुभक्तिहीने कथितमध्यात्मशास्त्रं निष्फलमिति तात्पर्यकेण 'यस्य देवे परा भक्ति'रिति श्रुत्यर्थं एव स्पष्टं वर्णित इत्यलमतिविस्तरेण ॥ तथाच विवरणवाचस्पत्यादिसर्वसिद्धान्तपर्यालोचने श्रवणमात्रादपरोक्षसंसारभ्रमनिवर्तकः साक्षात्कारो न संभवति, भगवद्भक्त्यादिना तु तत्प्रसादादप्रतिबद्धः साक्षात्कार इति सिद्धम् । देहान्ते इति 'य इह स्थातुमपेक्षते तस्मै सर्वैश्वर्यं ददाति यत्र कुत्रापि म्रियते देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे येनामृतीभूत्वा सोऽमृतत्वं च गच्छती'ति नृसिंहपूर्वतापिनीश्रुतिः । अस्या अर्थः—य उपासक इह लोके उत्कर्षेण स्थातुमपेक्षते तस्मै सर्वैश्वर्यं ददाति । सच यत्रकुत्रापि कुदेशे म्रियतां तस्मै देवः श्रीनृसिंहो देहान्ते परं ब्रह्म तारकं प्रणवप्रतिपाद्यं व्याचष्टे कथयति । अत्र श्रीमच्छंकरभगवत्पादभाष्यं कामिनं प्रकृत्य देहान्त इति विशेषणोपादानं कामित्वेन प्रागनधिकारात्, निष्कामस्य त्वर्वागपि देवः परं ब्रह्म तारकं व्याचष्टे इति । येन प्रणवव्याख्यानेन ब्रह्मणाऽधिगतेनामृतीभूत्वा देहत्रयोपाधेर्मुक्तो भूत्वा स श्रोता कैवल्यं प्राप्नोतीति । अनेन भगवद्भक्तस्य शारीरकशास्त्रोक्तश्रवणमननादिज्ञानसाधनानुष्ठानंविनैव भगवदुपासनमात्रेण ज्ञानान्मोक्ष इति सिद्धान्तो द्योतितः । तेन यदा भक्तेः साधनान्तरनिरपेक्षतया ज्ञानहेतुत्वं तदा तस्याः श्रवणादिष्वनुष्ठाने सुतरां श्रवणादिभ्यो ज्ञानसिद्धिरिति कैमुत्यसिद्धमिति भावः । **यमिति ।** एष परमात्मा यं पुरुषं वृणुते संभजति अनुगृह्णाति तेनैव लभ्यो नान्येनेत्यर्थः । 'अथापि ते देव पदाम्बुजद्वयप्रसादलेशानुगृहीत एव हि । जानाति तत्त्वं भगवन्महिम्नो नचान्य एकोऽपि चिरं विचिन्वन्' 'श्रेय स्रुतिं भक्तिमुदस्ये'त्यादिश्रवणात् । **यस्य देव इति ।** नन्वेवमन्योपनिषत्सु न श्रूयत इति चेन्न । गुणोपसंहारन्यायेन सर्वोपनिषत्स्वेतदर्थोपसंहारात् छान्दोग्यादावश्रुताया आकाशाद्युत्पत्तेरिव बृहदारण्यकोक्तशान्त्यादेरिव चेति दिक् ॥ १४ ॥ २७ ॥

**त्वमकरण इति ।** न वस्तुतस्तथात्वं कर्तृत्वभोक्तृत्वं जीवात्मानामपि सदात्व-

वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो
विदधति यत्र ये त्वधिकृता भवतश्चकिताः ॥१५॥२८॥

तर्हि जीवानामपि तत्तुल्यत्वमिति केन विशेषेण पुनः सेव्यसेवकत्वमितीमामाशङ्कां परिहरन्त्यः 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं नच तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं पुराण'मित्याद्याः श्रुतयः स्तुवन्तीत्याह—त्वमकरण इति । करणसंबन्धरहित एव अखिलकारकशक्तिधरः अखिलानां प्राणिनां यानि कारकाणीन्द्रियाणि तेषां शक्तीर्धारयति प्रवर्तयतीति तथा । कुतः । स्वराट् । यतः स्वेनैव राजसे दीप्यसे । नहि स्वतःसिद्धज्ञानशक्तेरिन्द्रियापेक्षेत्यर्थः । अतस्तव बलिमुद्वहन्ति पूजां कुर्वन्तीति । अजया अविद्यया सहिताः तयाऽऽवृता इत्यर्थः । अनिमिषा देवा इन्द्रादयः तत्पूज्या विश्वसृजो ब्रह्मादयोऽपि यथा सभीका एव किंकराः स्वामिनं सेवन्ते तथाऽविद्यायुक्ता देवादयस्त्वामिति लोकोक्तिः । समदन्ति च मनुष्यैर्दत्तं हव्यकव्यादिलक्षणं बलिं भक्षयन्ति । अत्र दृष्टान्तः—वर्षभुजोऽखिलक्षितिपतेरिवेति । यथा वर्षभुजः खण्डमण्डलपतयोऽखिलक्षितिपतेर्महामण्डलेश्वरस्य स्वप्रजादत्तबलिभुजो बलिमुद्वहन्ति तद्वदिति । कथं बलिं वहन्ति तदाह—विदधति यत्र

---

कर्तृत्वादिराहित्यं तुल्यमीशस्यापि च । विशेषेणेति । केनोत्कर्षेणेश्वरः सेव्यः केनापकर्षेण जीवः सेवक इत्यर्थः । अपाणीति । करचरणहीनोऽपि जवन. । विभुत्वेन तत्र तत्र गच्छतीवेति वेगवानिव भाति । ग्रहीता सर्वाधारत्वात् । करेण सर्वग्रहणवत्त्वं च । एतदितरकर्मेन्द्रियव्यापारोपलक्षणम् । चक्षुरादिज्ञानेन्द्रियशून्योऽपि अनावृतस्वरूपज्ञानेन रूपशब्दादिविषयोपलब्धिशाली वेद्यं सर्वं जडजातं वेत्ति तदितरस्य सर्वस्य जडत्वात्तस्य वेत्ता नेत्यर्थः । ईश्वरोऽनावृतज्ञानशक्त्यादि-

स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो
विहर उदीक्षया यदि परस्य विमुक्त ततः ।
नहि परमस्य कश्चिदपरो न परश्च भवे-
द्वियत इवापदस्य तव शून्यतुलां दधतः ॥ १६ ॥ २९॥

---

ये त्वधिकृता भवतश्चकिता इति । त्वत्तो भीताः सन्तो यस्मिन्कर्मणि नियुक्तास्ते तत्कुर्वन्तीति त्वदाज्ञापालनमेव बल्युद्वहनमित्यर्थः । तथाच श्रुतिः—'भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम' इति ॥ २८ ॥

अनिन्द्रियोऽपि यो देवः सर्वकारकशक्तिधृक् ।
सर्वज्ञः सर्वकर्ता च सर्वसेव्यं नमामि तम् ॥ १५ ॥

तदेवं करणप्रवर्तकमीश्वरं करणपरतन्त्रा नरा भजन्तीत्युक्तम्, न केवलमियदेव कारणं तत उत्पन्नत्वेनापि तत्परतन्त्रत्वादिति वदन्ति—'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे देवाः सर्वे लोकाः सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरन्ती' त्याद्याः श्रुतय इत्याह—स्थिरचरजातय इति । हे विमुक्त नित्यमुक्त, यदि तव अजया मायया विहरः विहारः क्रीडा भवति तदा स्थिरचरजातयः स्थिराश्च चराश्च जातयः जात्यालिङ्गिता देहा

---

मान्, जीवस्त्वविद्यावृतत्वादिन्द्रियाधीनज्ञानक्रियाशक्तिशालीति विशेषः । भीषा भीत्या वायुः पवते वातीत्यर्थः । पञ्चानां ग्रहणं ब्रह्मादिस्तम्बान्तचराचरोपलक्षणम् ॥ १५ ॥ २८ ॥

स्थिरचरेति । यथाग्नेरिति । अग्नेरेकरूपादद्वितीयाच्च क्षुद्रा अल्पा अग्निकणा विविधमुच्चरन्ति यथा तद्वदात्मनः कारणान्तरनिरपेक्षादेकरूपात्सर्वे प्राणा इन्द्रियाणि लोका भूरादयो विषया देवा इन्द्रियाणां लोकानां चाधिष्ठातारः भूतानि ब्रह्मादिस्थावरान्तशरीराणि आत्मानः अन्तःकरणोपाधयो जीवाश्च व्युच्चरन्ति ।

अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगता-
स्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा ।

येषां ते जीवाः स्युः भवेयुः । कथंभूतस्य । ततः अजातः परस्य दूरे वर्तमानस्य । असङ्गस्येत्यर्थः । कथं विहारः । उदीक्षया ईक्षणलेशेन । ननु मयि लीनानां जीवानां कथं जन्म स्यात्तत्राह—उरथनिमित्तयुज इति । ईक्षयैव उत्थान्युत्थितानि आविर्भूतानि निमित्तानि कर्माणि तद्युक्तानि लिङ्गशरीराणि वा तैर्युज्यन्त इति तथा । ननु किं निमित्तोत्थानेन, मदिच्छयैव भवन्तु, न, त्वयि वैषम्याभावात् विषमसृष्टेरयोगादित्याह—परमस्येति । तव परमस्य उत्तमस्य परमकारुणिकस्य वियत इवाकाशसदृशस्य । समस्येत्यर्थः । कश्चिदपरः स्वीयः परोऽस्वीयश्च न भवेत् । न संभवतीत्यर्थः । 'असद्वा इदमग्र आसीत् । ततो वै सदजायते'त्यादिश्रुत्या शून्यपूर्वकत्वमिव प्रतीयते । तदर्थं पुनर्विशिनष्टि—शून्यतुलां दधतः शून्यसाम्यं भजतः । तदेव दर्शयितुं पुनर्विशिनष्टि—अपदस्येति । न पद्यत इत्यपदः तस्य । वाङ्मनसयोरगोचरस्येत्यर्थः ॥ २९ ॥

त्वदीक्षणवशक्षोभमायाबोधितकर्मभिः ।
जातान्संसरतः खिन्नान्नृहरे पाहि नः पितः ॥ १६ ॥

एवं तावत्परमात्मनः सकाशादविद्याकृतकार्योपाधयस्तदंशा एव

---

ईक्षणलेशेनेति । सर्जनेच्छादिरूपेणेत्यर्थः । असद्वा इति । अग्रे शून्यमासीत् । शून्यादेव जगदभूदिति पूर्वपक्षार्थः । सिद्धान्ते तु इदं जगदग्रे सृष्टेः प्राक् असत् अव्याकृतनामरूपत्वादसत्तुल्यमतिसूक्ष्मं ब्रह्मैवासीत् । ततो ब्रह्मणः सत् व्याकृतनामरूपं जगदजायतेति ॥ १६ ॥ २९ ॥

अपरिमिता इति । संसरन्तो भजन्तीति । संसारान्मोक्षाय भजन्तीत्यर्थः ।

अजनि च यन्मयं तदविमुच्य नियन्तृ भवे-
त्सममनुजानतां यदमतं मतदुष्टतया ॥ १७ ॥ ३० ॥

जीवा जाताः संसरन्तो भजन्तीत्युक्तं तत्र यद्येकाऽविद्या तदा जीवस्याप्येकत्वादेकमुक्तौ सर्वमुक्तिप्रसङ्गः, अथ नाना विद्यास्तर्हि तस्यैवांशान्तरेण संसारानपगमादनिर्मोक्ष इत्यादिविकेवलेन वस्तुत एव नानात्मानः तत्र च तेषामणुत्वे देहव्यापि चैतन्यं न स्यात्, देहपरिमाणत्वे च मध्यमपरिमाणानां सावयवत्वेनानित्यत्वं स्यात्, अतः सर्वगताः नित्याश्चेति केचन मन्यन्ते । तत्र न तावदुक्तदोषप्रसङ्गः । अविद्याभेदेन तच्छक्तिभेदेन वा बद्धमुक्तव्यवस्थासंभवात् ।

---

तत्राद्वैतमते बन्धमोक्षव्यवस्थाया असंभवं शङ्कते—तत्र यदीति । सर्वमुक्तीति । तथाच कश्चन मुक्तः केचन बद्धा इति व्यवस्था परिह्रियमाणा न स्यादित्यर्थः । तस्यैवांशान्तरेणेति । अवच्छेदवादाभिप्रायेण पूर्वपक्षः । यथाऽनेकघटावच्छिन्न एक आकाश एकघटनाशे तस्य घटाकाशस्य महाकाशैक्येऽपि स महाकाशो घटान्तरेषु तथैवावच्छिन्नस्तिष्ठतीति न महाकाशैक्येनापि मुक्तिसिद्धिः, एवमात्मन एकत्वादनेकाविद्यावच्छिन्नस्य तस्यैकस्मिन्देहे ज्ञानोत्पत्त्याऽविद्यानाशेन शुद्धचैतन्यैक्येऽपि तस्यैव शुद्धचैतन्यस्य देहान्तरेऽविद्यावच्छिन्नस्य सत्त्वान्न मोक्षः संभवति । नहि करचरणादौ बहुशृङ्खलाभिर्बद्धपुरुष एकपादस्थशृङ्खलानाशे मुक्तो भवतीति भावः । केचन काणादादयः । प्रतिबिम्बपक्षाश्रयेण सिद्धान्तमाह—तत्र नेति । अविद्याभेदेनेति । अनेकाविद्यास्वेकस्येश्वरस्य बिम्बरूपस्यानेके प्रतिबिम्बाः । नहि प्रतिबिम्बस्य प्रतिबिम्बान्तरमंशः । एकस्य प्रतिबिम्बस्योपाधिवशेन चाचल्ये मालिन्ये वा प्रतिबिम्बान्तरस्य तदभावात् । ततश्च तस्यैवांशान्तरेण संसार इति दूषणानवतारः । यत्र देहे ज्ञानेनाविद्यानाशस्तत्प्रतिबिम्बस्यैव बिम्बेनैक्यान्मुक्तिः अन्यस्य यथापूर्वं संसारः [illegible] नेतरप्रतिबिम्बस्य कोऽप्यवयवः । नह्येकघटस्थसूर्यप्रतिबिम्बः प्रतिबिम्बान्तरस्यांशः संभवति । नन्वविद्याभेदाङ्गीकारे गौरवं तत्राह—तच्छक्तिभेदेन वेति । यथा महातन्तिरेका तदंशभूतानि दामानि भिन्नानि यद्राम च्छिन्नं तस्यैव गोर्मोक्ष एवमेका विद्या

ईश्वरस्य तु न केनाप्यंशेन संसारशङ्केत्युक्तमेव । प्रसिद्धं चात्मैक्यं सर्वश्रुतिषु । किंच इमं पक्षमन्तर्यामिब्राह्मणमपि न सहत इत्याह—**अपरिमिता इति** । वस्तुत एवानन्ताः ध्रुवास्तेनैव रूपेण नित्याः सर्वगताश्च तनुभृतो जीवा यदि स्युः तर्हि तेषां समत्वात् शास्यता न घटत

---

तदंशभूतास्तच्छक्त्या भिन्नाभिन्नास्तासु परमात्मनः प्रतिबिम्बा नानाजीवा ज्ञानेन यच्छक्त्युच्छेदस्तस्यैव बिम्बैक्येन मुक्तिरित्यर्थः । ननु तस्यैवांशान्तरेण संसार इत्यनेन प्रतिबिम्बपक्षेऽपीश्वरस्यैकस्यानेके प्रतिबिम्बा अंशा एकप्रतिबिम्बमुक्तावपीश्वरस्य बिम्बस्य प्रतिबिम्बान्तररूपांशान्तरेण संसारानपगम इति तस्यैवांशान्तरेण संसार इत्यनेन दूषणापादनमभिप्रेतमित्याशङ्कायामाह—**ईश्वरस्य त्विति** । प्रतिबिम्बचाञ्चल्यादिधर्माणां बिम्बे संबन्धगन्धस्याप्यदर्शनात्, प्रतिबिम्बे बिम्बांशत्वस्यौपचारिकत्वादीश्वरस्य बिम्बस्य केनाप्यंशेन बद्धेन मुक्तेन वा प्रतिबिम्बभूतजीवेन संसारो बद्धत्वं मुक्तत्वं वा नेत्युक्तमेवेत्यर्थः । ननु वस्तुतो नानात्मस्वीकारेणापि बद्धमुक्तव्यवस्था संभवति, अविद्याद्युपाधिकृत एवात्मभेदो वस्तुत एक एवात्मेति पक्षेणापि सा संभवति, तत्र किं विनिगमकं यदौपाधिकात्मभेदाश्रयेणैव सा व्यवस्थेति तत्राह—**प्रसिद्धं चेति** । 'एको देवः सर्वभूतेषु गूढः' 'नेह नानास्ति किंचन' 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' 'एकधा बहुधा चैव दृश्यते जलचन्द्रव'दित्यादिश्रुतिषु वास्तवात्मैक्यमौपाधिक एवात्मभेद इति प्रतिपादनात्काणादादिपक्षो न ग्राह्य इत्यर्थः । आत्मनानात्वखण्डनं श्लोकार्द्धं कुर्वन् अवच्छेदपक्षे दूषणं व्यञ्जयति—**किंचेति** । इमं पक्षं काणादाद्युक्तमात्मनो विभुत्वनानात्वादिकमवच्छेदपक्षं चान्तर्यामिब्राह्मणं न सहत इत्यर्थः । 'आत्मनि तिष्ठन्नात्मानमन्तरो यमयती'त्यादौ हि देहाद्यन्तःस्थित्वा परमात्मनो नियामकत्वमुक्तं ननु सारथ्यादिवद्बहिः स्थित्वेति तन्न घटेत, अवच्छेदपक्षे अविद्याद्यन्तःस्थितस्य जीवत्वादनवच्छिन्नस्याऽनियामकस्योपाध्यन्तरभावात् । नहि घटे घटावच्छिन्नं घटानवच्छिन्नं चेत्याकाशद्वयमस्ति । प्रतिबिम्बपक्षे तु जलावच्छिन्नजलप्रतिबिम्बितेत्याकाशद्वयवदविद्यावच्छिन्नमविद्याबिम्बितं चेति चैतन्यद्वयमस्ति तत्रावच्छिन्नस्य नियामकत्वं प्रतिबिम्बस्य जीवस्य नियम्यत्वमिति सिद्धमन्तःस्थित्वा नियामकत्वमिति दिक् । **समत्वादिति** । विभुत्वेन नित्यत्वेन चेश्वरसमत्वाज्जीवस्य त्वच्छा-

इति कृत्वा हे ध्रुव, नियमो नियमनं त्वया न स्यात् । इतरथा तु घटेत । कथं यन्मयमुपाधितो यद्विकारप्रायं यज्जीवाख्यमजनि जातं तत्तस्य स्वविकारस्य नियन्तृ नियामकं भवेत् । अविमुच्य कारणतया अपरित्यज्य । किं तत् । सममनुस्यूतम् । ननु किं यत्तच्छब्दैर्ज्ञायते वेदस्तुत्यतामिदं तदिति अत आह—**अनुजानतां यदमतमिति ।** जानीम इति यदुक्तं यदमतमविज्ञातप्रायम्, अविषयत्वात् । तथाच श्रुतिः 'यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम्' 'अवचनेनैव प्रोवाच स ह तूष्णीं बभूवे'त्यादि । किंच मतस्य ज्ञातस्य दुष्टतया दोषश्रवणात् । तथाच श्रुतिः— 'यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं यदस्य

---

स्यता नेत्यर्थः । नियमनं त्वया न स्यादिति । एवमात्मैक्यसिद्धान्तेऽव्यवच्छेदपक्षाश्रयणे नियम्यनियामकभावो न स्यादित्यपि बोध्यम् । **उपाधित इति ।** अविद्याद्युपाधिवशाद् बिम्बरूपब्रह्मणो विकाररूपं जीवाख्यं जातं तत् बिम्बरूपं ब्रह्म स्वविकारस्य प्रतिबिम्बस्य जीवस्य नियामकमित्यर्थः । ननूपाधिबहिष्ठस्य बिम्बत्वं नान्तर्गतस्य, तथाच कथं प्रतिबिम्बमविमुच्योपाध्यन्तःस्थित्वा बिम्बस्य नियामकत्वं तत्राह—**सममनुस्यूतमिति ।** जलावच्छिन्नाकाशमहाकाशयोरैक्यवत् अविद्यावच्छिन्नबिम्बचैतन्ययोरैक्यादुपाध्यवच्छिन्नानुस्यूतस्वरूपेण बिम्बस्यैव नियामकत्वमिति भावः । **यस्येति ।** यस्य ब्रह्मविदो ब्रह्म अमतमविदितमिति निश्चयस्तस्य ब्रह्म मतं स ब्रह्मवेत्तेत्यर्थः । यस्य तु मतं ज्ञातं ब्रह्मेति निश्चयः स ब्रह्म नैव वेदेत्यर्थः । यस्माद्विजानतां सम्यग्ज्ञानिनां ब्रह्म अविज्ञातं ज्ञानाविषय इति पक्षः । अविजानतां अज्ञानिनां विज्ञातं ज्ञानविषयो ब्रह्मेति पक्ष इति । **अवचनेनेति ।** वक्ता अवचनेन वचनाभावेनैव प्रोवाच ब्रह्म वाङ्मनसागोचरमिति लक्षणया कथयामास । स श्रोता तेनैव लक्षणेन सर्वप्रमाणाविषयं ब्रह्मेति बुध्वा तूष्णीं बभूव । न किंचिदपि प्रश्नादि कृतवानित्यर्थः । **यदीति ।** यदि कदाचिन्मन्यसे

**न घटत उद्भवः प्रकृतिपूरुषयोरजयो-**
**रुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत् ।**
**त्वयि त इमे ततो विविधनामगुणैः परमे**
**सरित इवार्णवे मधुनि लिल्युरशेषरसाः ॥ १८ ॥ ३१ ॥**

---

त्वं यदस्य देवेषु'इत्यादि । तस्माद्यत्तच्छब्दावयोत्यमतक्र्यं किमपि सर्वानुस्यूतत्वेन समं नियन्तृ भवेदित्यर्थः ॥ ३० ॥

अन्तर्यन्ता सर्वलोकस्य गीतः श्रुत्या युक्त्या चैवमेवावसेयः ।
यः सर्वज्ञः सर्वशक्तिर्नृसिंहः श्रीमन्तं तं चेतसैवावलम्बे ॥१७॥

ननु यदि च परमात्मनो जीवा जायन्त इति नियन्तृनियम्यभाव उच्यते तथासति जीवानामनित्यत्वप्रसङ्गेन प्रतिदिनं कृतनाशाऽकृताभ्यागमप्रसङ्गः स्यात् । किंच तदा मोक्षो नाम जीवस्य स्वरूपहानिरेव स्यात् । नचैतद्युक्तम् । स्वप्रकाशानन्दात्मनोऽविद्याकृतानर्थनिवृत्तिमात्रस्य मोक्षत्वाभ्युपगमादित्याशङ्क्योपाधिजन्मनैव जीवानां जन्मोच्यते न स्वतः अघटनादित्याह——न घटत इति । तत्र किं प्रकृतेर्जीवरूपेणोद्भवः स्यात्, पुरुषस्य वा, उभयोर्वा । आद्ये जीवानां जडत्वापत्तिः । द्वितीये पुरुषस्य विकारित्वप्रसङ्गः । अतएव न

---

सुष्टु वेदाहं ब्रह्मेति तर्हि त्वं यदस्य ब्रह्मणो रूप तद्ब्रह्मल्पमेव वेत्थ । यदस्य ब्रह्मणो देवेष्वधिदैवतं रूपं तदल्पमेव त्व वेत्थेत्यर्थ ॥ १७ ॥ ३० ॥

**न घटत इति । नन्विति ।** परमात्मनो बिम्बात् प्रतिबिम्बा जीवा जायन्ते इति कारणस्य बिम्बस्य कार्यजीवनियामकत्वे जीवस्य कार्यत्वेनानित्यत्वप्रसङ्ग इत्यर्थ. । **उपाधिजन्मनैवेति** । अन्त करणोपाधिजन्मना जीवाना बुद्धिप्रतिबिम्बितप्रमातृसत्काना जन्मोच्यत इत्यर्थ । अविद्याप्रतिबिम्बस्तु जीवः अविद्याया अनादित्वादनादिरेवेति न तस्योत्पत्तिः । 'जीव ईशो विशुद्धा चि'दित्यनेन षण्णा-

तृतीय इत्याशयेनोक्तं प्रकृतिपुरुषयोरुद्भवो न घटत इति श्रुत्याऽजत्वप्रतिपादनादपीत्याह—**अजयोरिति** । तथाच श्रुतिः—'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य'इति, उभययुजा तु भवन्ति उभयं च तद्युज्यत इति युक् संबद्धं परस्पराध्यस्तमिति यावत् । तेन असुभृतः प्राणाद्युपाधयो जीवा जायन्त इत्यर्थः । **जलबुद्बुदवदिति** । यथा केवलेन जलेनानिलेन वा जलबुद्बुदा न भवन्ति किंतु मिलिताभ्यां तद्वत् तत्र यथाऽनिलो निमित्तं, जलमुपादानं एवमत्रापि प्रकृतिर्निमित्तं पुरुष उपादानम् । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' 'सोऽकामयत बहु स्यां प्रजायेये'ति

---

मनादित्वोक्तेः । **अजयोरिति** । अनाद्योरित्यर्थः । **अजामेकामिति** । न जायत इत्यजा तां मूलप्रकृतिं । लोहितशुक्लकृष्णां रजःसत्वतमोगुणवतीम् । सरूपां त्रिगुणात्मिकां प्रजां एकोऽजो जीवस्तां शब्दादिविषयरूपतापन्नां जुषमाणः सन्ननुशेते निरन्तरं भुङ्क्ते । जीवेन भुक्तो भोगो यस्यां तां जीवेन भुज्यमानामेनामन्यः परमात्मा जहाति । नास्यामासक्तिं करोतीत्यर्थः । यद्वा एको जः अज्ञानी जीवः अन्यः अजो प्रज्ञो जीव इति । अत्राऽजाशब्देन गौण्या लौकिकछागीसादृश्यं रक्तादिरूपवत्त्वां तेजोबन्नात्मिकायां प्रकृतौ प्रतिपाद्यते नतु योगवृत्त्या जन्मराहित्यमिति 'कल्पनोपदेशाच्चेति' सूत्रस्य भाष्यमत्र श्रुत्यन्तरमनुसंधेयम् । **परस्पराध्यस्तमिति** । परमात्मनि प्रकृतिरनादिरध्यस्ता स्वरूपेण तस्यां परमात्मनोऽपि सत्तास्फूर्तिरूपेण संसर्गाध्यासः, अधिष्ठानस्य शुक्त्यादेः संसर्गमात्रं रजतेऽध्यस्यते रजतं स्वरूपेण शुक्तावध्यस्यते इति सिद्धान्तात्, परमात्मनोऽपि स्वरूपाध्यासे बाधापत्त्या शून्यवादप्रसङ्गात् । **प्राणाद्युपाधय इति** । लिङ्गदेहस्यैव सृष्ट्यारम्भे जन्म भवति तेन लिङ्गदेहान्तर्गतबुद्धिजन्मना बुद्धिबिम्बितो जीवो जायत इत्युच्यत इत्यर्थः । लिङ्गदेहस्यापि प्रलये संस्काररूपेणाविद्यायां स्थितस्यैव प्रादुर्भावमात्रं भवति, सत्कार्यवादात् लयस्यापि सावशेषत्वात् । अतो न कृतनाशादिदोष इति भावः । **तस्मादिति** । तस्मादुपक्रमोक्तादेतस्मात् 'सत्यं ज्ञान-

'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एवात्मानो व्युच्चरन्ती'त्यादिश्रुतिषु चेतनाचेतनप्रपञ्चस्य परमात्मोपादानत्वश्रवणात् । नच विकारित्वं, परिणामानङ्गीकारात् । केचित्पुनः परिणाममङ्गीकृत्य आत्मनो विकारभिया विपरीतं निमित्तोपादानभावमिच्छन्ति । सर्वथा तावत्प्रकृतिपुरुषैक्याद्भवतीति सिद्धम् । तत् 'एकमेवाद्वितीयं ब्रह्म' 'अजामेकाम्' 'अविनाशी वाऽरेऽयमात्मे'त्यादिश्रुतिबलात् उत्पत्तिश्रवणाच्च जीवानामौपाधिकमेव जन्म न वस्तुत इत्युक्तम्, उपाधिलयेन परमात्मनि पुनर्लयश्रवणादपि न वास्तवं जन्मेत्याह—त्वयि त इति । त्वयि कारणात्मनि । त इमे जीवाः । तत इति ।

---

मनन्तं ब्रह्मे'ति लक्षितादात्मनः परमात्मन उपादानादाकाश उत्पन्न आकाशभावापन्नाद्ब्रह्मण एव वायुरित्यादिरर्थः । **परिणामानङ्गीकारादिति** । कारणसमसत्ताकोऽन्यथाभावः परिणामः । कारणविषमसत्ताकोऽन्यथाभावो विवर्तः । व्यावहारिकसत्यत्वयुक्तमृद्दुग्धादेर्व्यावहारिकसत्यं घटदध्यादि जायत इति घटादिः परिणामः । व्यावहारिकसत्यत्वयुक्तशुक्त्यादेः प्रातिभासिकसत्यं रजतादि जायत इति रजतादि विवर्तः । परिणामिन एव कारणस्य विकारित्वं न विवर्तोपादानस्य, प्रकृते पारमार्थिकसत्याद्ब्रह्मणो व्यावहारिकसत्यं जगदुत्पद्यते इति विवर्तोपादानत्वं ब्रह्मण इति न विकारित्वप्रसङ्ग इत्यर्थः । विपरीतं ब्रह्म निमित्तं प्रकृतिरुपादानमिति । **भवतीति** । नचैवं जीवानामनित्यत्वेन स्वरूपहानिरेव मोक्ष इति दोषापत्तिः । प्रतिबिम्बस्य बिम्बरूपतया सत्यत्वाभ्युपगमात् । विवरणमते हि प्रतिबिम्बाध्यासो न धर्म्यध्यासः किंतु बिम्बभेदोपाध्यन्तःस्थितत्वादिधर्ममात्रमध्यस्यते, स्वरूपं तु सत्यबिम्बात्मकमेवेति सिद्धान्तात् । भारतीतीर्थसिद्धान्ते परंप्रतिबिम्बो मिथ्या शुक्तिरजतवत् । तन्मतेऽवच्छिन्नस्य पारमार्थिकजीवस्य मोक्षान्वयित्वं बोध्यम् । एवंचाविद्योपाधिकस्यानादेर्बुद्ध्युपाधिकस्य सादेर्वा जीवस्येशनिय-

यतो न वास्तवं जन्म तस्माद्विविधनामगुणैरनेकप्रकारकार्योपाधिभिः सह लिल्युः लीना बभूवुः । तत्र सुषुप्तिप्रलययोर्मधुन्यशेषरसा इव लीयन्ते, यथा मधुनि सकलकुसुमरसा विशेषतोऽनुपलक्ष्यमाणा अपि सामान्येनोपलक्ष्यन्ते एवं स्वापादौ विशेषमात्रलयात् कारणस्य विद्यमानत्वात् सामान्यतो वर्तन्ते, मुक्तौ [illegible] कारणस्यापि लयात् त्वयि परमे निरुपाधौ सरित इवार्णवे लीयन्त इति विवेकः । तथाच श्रुतयः—'यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकतां संगमयन्ति ते यथा तत्र न विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह' इति । 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नाम-

---

न्यत्वं न विरुद्धं प्रतिबिम्बमात्रस्य बिम्बनियम्यत्वोपपत्तेरिति संक्षेपः । **उपाधिभिः सहेति** । वास्तवजन्मसत्त्वे उपाधिलयं विनैव लयः स्यात्, जलाकाशस्य हि जलोपाधिकजन्मवतो जललय एव लयो न जलसत्त्वे, जलस्य तु घटोपाधिकजन्माभावाद्घटसत्त्वेऽपि लयो दृश्यते तद्वदिति भावः । **कारणस्येति** । अविद्याया बीजरूपेण लिङ्गदेहस्य चेत्यर्थः । तत्र सुप्तिप्रलयविषया श्रुतिः **यथासोम्येति** । हे साधो, मधुकृतो मधुमक्षिकाः मधु निस्तिष्ठन्ति निष्पादयन्ति नानात्ययानां नानागतीनां नानाजातीनां वृक्षाणां पुष्परसान् समवहारमाहृत्य एकतां मधुरूपतामापादयन्ति ते रसा यथामुष्य वृक्षस्याहं रस इति भेदं न लभन्ते न विदुः । पुरुषैर्ज्ञायमानभेदवन्तो न भवन्तीत्यर्थः । पुरुषज्ञानानां रसेषूपचारात्, एवमिमाः प्रजाः स्वापप्रलयादौ सति ब्रह्मणि संपद्य एकीभूय ब्रह्मैक्यं प्राप्ता वयमिति [illegible] विदुरित्यर्थः । अथ मुक्तविषया श्रुतिः—**यथा नद्य इति** । स्यन्दमानाः स्रवन्त्यो गच्छन्त्यः समुद्रं प्राप्याऽस्तमदर्शनं प्राप्नुवन्ति तथा ब्रह्मज्ञो विदेहकैवल्यकाले पराद्ब्रह्मादेः परं बिम्बभूतं परमेश्वरं प्राप्नोतीत्यर्थः । **यस्मिन्निति** । प्रलयस्वापादिकाले जीवसहितं विश्वं लिङ्गदेहादिकं विलयं यदपि प्राप्नुवदपि भाति संस्काररूपेण सूक्ष्मतया तिष्ठति । यदिति इण्गताविति धातोः शतृप्रत्यये रूपो

**नृपु तव मायया भ्रमममीष्ववगत्य भृशं**
**त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् ।**

रूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्य' मित्याद्याः ॥ ३१ ॥

यस्मिन्नुद्यद्विलयमपि यद्भाति विश्वं लयादौ
जीवोपेतं गुरुकरुणया केवलात्मावबोधे ।
अत्यन्तान्तं व्रजति सहसा सिन्धुवत्सिन्धुमध्ये
मध्येचित्तं त्रिभुवनगुरुं भावये तं नृसिंहम् ॥ १८ ॥

नन्वेवं तावत्परमेश्वराज्जीवा जायन्ते तद्वशेन च कर्माणि कुर्वन्ति पुनस्तत्र लीयन्त इति संसारचक्रे परिभ्रमणमुक्तम् । इदानीं तन्नि-

---

लुकि शतृप्रत्ययस्य हिलात्गुणाभावे इयङुपवादभूते 'इणो यणि'ति यणि कृते रूपम् । गत्यर्थकाना प्राप्त्यर्थत्वस्य प्रसिद्धेः । सत्कारावशेषपलये हेतुः—उद्यदिति । सृष्टिकाले जागरणकाले चोत्पन्नं भवदित्यर्थः । निरवशेषपलये पुनरुत्पन्नं न स्यादिति भावः । गुरूपदेशेन ब्रह्माभिन्नकूटस्थात्मसाक्षात्कारे सति अत्यन्तमनन्तं निरवशेषं लयं निरुपाधितादात्म्यं समुद्रमध्ये नदीवत् व्रजति यस्मिन् तं विश्वाधिष्ठानं विश्वलयाधिष्ठानं मुक्तजीवप्राप्यं च मध्येचित्तं चित्तस्य मध्ये भावये । मुक्तजीवैक्यस्थानत्वोक्त्या मुक्तप्राप्यत्वेन निरुपाधिब्रह्मत्वं नृसिंहस्य व्यञ्जितम् । त्रिभुवनस्य गुरुं जनकं हितोपदेष्टारं चेति तद्भजने गुरुद्रोहः कृतघ्नता च व्यज्यते । नृसिंहं नृषु सि बन्धं हन्ति तं इति भवबन्धच्छेदकत्वोक्त्या तदभावे मोक्षाभावो व्यज्यते । मध्येचित्तमिति 'पारेमध्ये षष्ठ्या वा' इत्यव्ययीभावसमासः । निपातनात्पूर्वपदे एकारः । अत्रालुक्समास इति वादिनो भ्रान्ताः । न च 'पारेमध्य' इति सूत्रेण सप्तम्या अलुगेव निपात्यत इति वाच्यम् । गङ्गाया मध्याद् आगत इत्यर्थे मध्येगङ्गमागत इति प्रयोगप्राप्तेरिति दिक् ॥ १८ ॥ ३१ ॥

नृपु तव । परीत्येति । भूतानि परीत्य सर्वभूतेष्वात्मा [illegible] लोकान् स्वर्गादीन् कर्मचितत्वेनानित्याञ्ज्ञात्वा सर्वा दिशः [illegible]

कथमनुवर्ततां भवभयं तव यद्भ्रुकुटिः
सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम् ॥ १९ ॥ ३२ ॥

---

वृत्तये 'परीत्य भूतानि परीत्य लोकान् परीत्य सर्वाः प्रदिशो दिशश्च' 'उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेशे'त्याद्या भगवदनुवृत्तिं विदधतीत्याह—नृषु तव माययेति । नृषु जीवेषु अमीषु तव मायया भ्रममुक्तलक्षणमवगत्य ज्ञात्वा सुधियः भृशं त्वयि अभवे भवनिवर्तके भावं स्वभावमनुवृत्तिं दधति कुर्वन्ति । कीदृशं भ्रमम् । अनुप्रभवं अन्वनु प्रभवो यस्मिंस्तं भ्रमम् । ततः किमत आह—कथमिति । अनुवर्ततामनुवर्तमानानां त्वामेव शरणं भजतां भवभयं संसारभयं कथं भवेत् । न कथंचिदपीत्यर्थः । कुतः। यद्यस्मात्तव भ्रुकुटिः भ्रूभङ्गरूपस्त्रिणेमिः तिस्रो नेमय इवावच्छेदकाः शीतोष्णवर्षाकाला यस्य संवत्सरात्मकस्य कालस्य सः अभवच्छरणेषु न भवान् शरणं रक्षिता येषां तेष्वेव भयं जन्ममरणादिलक्षणं सृजति करोति । अत एवंभूतं संसारमाकलय्य तन्निवृत्तये सुधियस्त्वयि भावं दधतीति ॥ ३२ ॥

संसारचक्रक्रकचैर्विदीर्णमुदीर्णनानाभवतापतप्तम् ।
कथंचिदापन्नमिह प्रपन्नं त्वमुद्धर श्रीनृहरे नृलोकम् ॥१९॥

---

चानप्यनित्यान् ज्ञात्वा प्रथमजां त्रयीलक्षणां वाचमुपस्थाय संसेव्य आत्मना मनसा ऋतस्य परमेश्वरस्यात्मानं स्वरूपं अभिसंविवेश आश्रितवान् कश्चन मुमुक्षुरित्यर्थः । संसारेति । आपन्नं विपत्तिप्राप्तं कथंचित् आर्ततया जिज्ञासुतया सकामतया दम्भादिना वा त्वां प्रपन्नं शरणागतमुद्धरेति ॥ १९ ॥ ३२ ॥

विजितहृषीकवायुभिरदान्तमनस्तुरगं
य इह यतन्ति यन्तुमतिलोलमुपायखिदः ।
व्यसनशतान्विताः समवहाय गुरोश्चरणं
वणिज इवाऽज सन्त्यकृतकर्णधरा जलधौ ॥ २० ॥ ३३ ॥

---

सच भगवति भावो मनोनियमे सति भवति सोऽपि गुरूपसदनादिति गुरूपसदनं विदधति 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं' 'आचार्यवान्पुरुषो वेद' 'नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठे'त्याद्याः श्रुतय इत्याह—विजितहृषीकवायुभिरिति । विजितानि हृषीकाणीन्द्रियाणि वायुश्च प्राणो यैस्तैरपि अदान्तमनस्तुरगं अदान्तमदमितं मन एव तुरगः दुर्दमत्वसाम्यात् तं ये यन्तुं नियन्तुं यतन्ति प्रयतन्ते अतिलोलमतिचञ्चलम् । गुरोश्चरणं समवहाय अनाश्रित्य ते उपायेषु खिद्यन्ते क्लिश्यन्तीत्युपायखिदः सन्तो व्यसनशतान्विता बहुव्यसनाकुला इह संसारसमुद्रे सन्ति तिष्ठन्ति । दुःखमेव प्राप्नुवन्तीत्यर्थः । हे अज, अकृतकर्णधरा अस्वीकृतनाविका वणिजो यथा

---

तद्विज्ञानार्थमिति । स निर्विण्णो ब्राह्मणो नित्यात्मतत्त्वसाक्षात्कारार्थं गुरुमेवाभिगच्छेत् नतु निपुणोऽपि स्वयं वेदान्तं विचारयेत् । समित्पाणिः रिक्तेति 'रिक्तपाणिर्न पश्ये'दिति शास्त्रादुपायनपाणिरित्यर्थः । धनफलपुष्पाद्यलाभे आकाष्ठमप्युपायनं ग्राह्यमिति व्यञ्जनाय समित्पदम् । श्रोत्रियं वेदशास्त्राध्ययनसंपन्नं गुरुमिति गुरोः शिष्यसंशयच्छेदे सामर्थ्यम् । ब्रह्मनिष्ठं ब्रह्मसाक्षात्कारशालिनमिति बोधसंचारसामर्थ्यम् । आचार्यवान् उक्तविधः प्रशस्तो गुरुर्यस्य स एवं पुरुषो ब्रह्म वेद । नैषेति । वेदान्तशास्त्रजन्या मतिस्तर्केण स्वमत्यूहमानेण आपनेया बाधार्हा न । यद्वा तर्केण प्रापय्या नेत्यर्थः । किंतु अन्येन निपुणेना-

स्वजनसुतात्मदारधनधामधरासुरथै-
स्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे ।
इति सदजानतां मिथुनतो रतये चरतां
सुखयति कोन्विह स्वविहते स्वनिरस्तभगे ॥ २१ ॥ ३४॥

वद्वत् । गुरुणोपदर्शितभगवद्भजनसुखानुभूतौ तु स्वत एव मनो निश्चलं भवति नान्यथेति भावः ॥ ३३ ॥

यदा परानन्दगुरो भवत्पदे पदं मनो मे भगवँल्लभेत ।
तदा निरस्ताखिलसाधनश्रमः श्रयेय सौख्यं भवतः कृपातः ॥२०॥

'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन' तथा 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत' इत्याद्या वैराग्यमन्त्रं विदधतीत्याह—स्वजनसुतेति । आत्मा देहः धाम गृहम् असुः प्राणः स्वजनादिभिः किं सर्वरसे सर्वे रसाः सुखानि विद्यन्ते यस्मिन् तस्मिन् त्वयि परमानन्दे । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेः ।

---

चार्येण प्रोक्ता प्रबोधिता सती सुखानाय साक्षात्काराय भवति । भेऽद्य हे भिवनगेऽपि नाथिकैतदं प्रति यमसंबोधनम् ॥ २० ॥ २१ ॥

परीक्ष्येति । लोकान् भूरादीन् भोग्यान् परीक्ष्य विचारेणानित्यतया निश्चित्य निर्वेदं वैराग्यं प्राप्नुयात् । अकृतो नित्यो मोक्षः कृतेन कर्मणा नेऽति । यदा यस्मिन् काले सर्वे कामा विषयाः ये अस्य विदुषो हृदि बुद्धौ पापनाशनेन प्रविष्टाः प्रमुच्यन्ते नश्यन्ति, अथ तदैव मर्त्यः अमृतो मुक्तो भवति, अत्र अभिमेव

भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदा-
स्त उत भवत्पदाम्बुजहृदोऽघभिदङ्घ्रिजलाः ।
दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे
न पुनरुपासते पुरुषसारहरावसथान् ॥ २२ ॥ ३५ ॥

---

श्रयतः त्वां सेवमानस्य पुंसः आत्मनि सति नृणां तुच्छैरेतैः किं क उपयोगः इति सत् सत्यं परमार्थसुखमजानतामतएव मिथुनतः स्त्रिया मिथुनीभूय रतये मायासुखाय चरतां प्रवर्तमानानाम्। कर्मणि षष्ठ्यौ । अजानतः चरतः पुरुषान् को नु अर्थः सुखयति आनन्दयति। न कोऽपीत्यर्थः । इह संसारे । कथंभूते । स्वविहते स्वत एव नश्वरे । स्वनिरस्तभगे स्वत एव गतसारे । पाठान्तरेतु कोन्विदस्यैतद्विशेषणद्वयम् । अतस्त्वद्भजनमेवोचितमित्यर्थः ॥ ३४ ॥

भजतो हि भवान्साक्षात्परमानन्दचिद्धनः ।
आत्मैव किमतः कृत्यं तुच्छदारसुतादिभिः ॥ २१ ॥

एवं गुरूपदेशेन तत्त्वमवगम्य सारासारविवेकेन च सर्वतो निर्विद्य तदेव महत्सङ्गेनोपपत्तिभिः सम्यगवधारयितुं तीर्थसदनानि मुनयः पर्यटन्तीति 'श्रोतव्यो मन्तव्य' इत्यादिश्रुत्यर्थमाह—**भुवि पुरुपुण्यतीर्थसदनानीति** । ते उक्तलक्षणा ऋषयो विमदाः निरहंकाराः ।

---

जन्मनि ब्रह्म प्राप्नोति । ब्रह्मैव भवतीत्यर्थः । **एतस्यैवेति** । ब्रह्मलोकस्थानन्दाच्छतगुणोत्कृष्टतयोक्तस्य परमानन्दस्य ब्रह्मरूपस्य मात्रा लेशमन्यानि भूतानि ब्रह्मादिस्थावरान्तान्युपजीवन्तीत्यर्थः । पाठान्तरे इति । 'कोन्विह स्वविहत' स्वनिरस्तभग' इति प्रथमान्तपाठे ॥ २१ ॥ ३४ ॥

**भुवीति** । ऋषयो वेदार्थतत्त्वं जानन्त इत्यर्थः । तीर्थानि गङ्गादीनि सदनानि च वृन्दावनादीनीति द्वन्द्वः । **अथवेति** । पक्षे पुरुपुण्यानि च तानि

सत इदमुत्थितं सदिति चेन्ननु तर्कहतं
व्यभिचरति क्व च क्व च मृषा न तथोभययुक् ।

यतो भवत्पदाम्बुजहृदः भवतः पदाम्बुजं हृदि येषां ते । अतः स्वयमेव अघभित् अङ्घ्रिजलं येषां ते उत अपि तथाविधा अपि पुरूणि बहूनि पुण्यानि तीर्थानि सदनानि च क्षेत्राणि तान्येवोपासते सेवन्ते प्रायस्तत्रैव महत्सङ्गो भवति इति, अथवा पुरु अधिकं भगवद्भजनलक्षणं पुण्यं येषां तानि च तानि तीर्थानि च गुरवः महान्त इत्यर्थः । तेषां सदनानि आश्रमान् । यथाह्यामरसिंहः 'निपानागमयोस्तीर्थमृषिजुष्टे जले गुरा'विति । न पुनः पुरुषसारहृदावसथान् उपासते । पुरुषाणां सारं विवेकस्थैर्यधैर्यक्षमाशान्तिप्रमुखं हरन्तीति तथा ते च ते आवसथा गृहास्तान् । नच तेषां गृहादिभवकुत्सितसुखापेक्षेत्याह—दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुख इति । सकृदपि त्वयि ये मनो दधति तेऽपि गृहाद्यासक्ता न भवन्ति किंपुनरेवंभूता इत्यर्थः ॥ ३५ ॥

मुञ्चन्नङ्ग तदङ्गसङ्गमनिशं त्वामेव संचिन्तयन्
सन्तः सन्ति यतो यतो गतमदास्तानाश्रमानावसन् ।
नित्यं तन्मुखपङ्कजाद्विगलितत्वत्पुण्यगाथामृत-
स्रोतःसंप्लवसंप्लुतो नरहरे न स्यामहं देहभृत् ॥ २२ ॥

ननु 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तद्भूतानां क्रि-

तीर्थानि गुरवस्तेषां सदनानीति कर्मधारयपूर्वपदगर्भस्तत्पुरुषः । ये भवत्पदाम्बुजहृद इत्यादिलक्षणा ये च सकृत्त्वयि मनो दधति ते च तेऽपि चेत्यन्वयः । मुञ्चन्नङ्गेति । अङ्ग भो नरहरे, यद्वा अङ्गं शरीरं तदङ्गानि च पुत्रदारगृहधनादीनि तेषु सङ्गमासक्तिं मुञ्चन्नित्यर्थः ॥ २२ ॥ ३५ ॥

सत इदं । श्रीमद्भागवतं येषांप्रसादात्संप्रकाशितम् । तान् श्रीधरान् श्रीगु-

व्यवहृतये विकल्प इषितोऽन्धपरम्परया
भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥२३॥३६॥

यार्थेन समन्वय' इति तत्र तत्र जैमिनिना वेदस्य क्रियापरत्वाभिधानादुपनिषदामपि तदेव युक्तम् । यथोक्तं तन्त्रवार्तिककृता—'एतेन क्रत्वर्थकर्तृप्रतिपादनेनोपनिषदां नैराकाङ्क्ष्यं व्याख्यात'मिति ।

---

सिंहमपि वन्दे जगद्गुरुम् ॥१॥ अत्र सत इदमुत्थितं सदिति चेदिति पूर्वपक्षः किं पूर्वपक्षः पूर्वमीमांसकानामाहोस्वित् सांख्यादीनामिति संदेहे 'संदिग्धे तु वाक्यशेषा'दिति न्यायेन श्लोकोपसंहारे 'उरुवृत्तिभिरुक्थजडा'निति मीमांसकोपादानात् उपक्रम उक्तः । सत इदमुत्थितमित्यादिपूर्वपक्षोऽपि मीमांसकानामेवेति निश्चिन्वावतारयति—जन्विति । मीमांसका हि कर्मण एव परमपुरुषार्थहेतुत्वं निश्चित्य सर्वस्य वेदस्य क्रियापरत्वं वर्णयन्ति । कर्मणश्च परमपुरुषार्थहेतुत्वं तदैव निर्वहेत् यदा कर्मफलभूतस्य स्वर्गादिजगतः सत्यत्वादिकं स्यादिति जगतः सत्यत्वं प्रवाहनित्यत्वादिकं च वर्णयन्ति । नहि भोक्तृभोग्यात्मकद्वैतस्य मिथ्यात्वे तत्फलकस्य कर्मणः परमपुरुषार्थहेतुत्वं वेदस्य सर्वस्य असत्यफलकक्रियापरत्वं वा युज्यत इति जगत्सत्यत्ववर्णनं मीमांसकानामेवावश्यकम् । सांख्यकाणादादीनां तु ज्ञानस्याभोक्त्रात्मस्वरूपेणात्रस्थानात्मकमोक्षहेतुत्वं वदतां किं जगत्सत्यत्वग्रहेणेति मीमांसकानामेवायं पूर्वपक्षः । तत्र 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते'इत्येतावत्पूर्वपक्षसूत्रम् । अस्यार्थः—आम्नायस्य वेदस्य यज्ञादिक्रियाप्रतिपादनपरत्वादतदर्थानां अक्रियार्थानां 'सोऽरोदीत्' 'प्रजापतिरात्मनो वपामुदखिदत्' 'वायुर्वै क्षेपिष्ठा देवते'त्यादीनां वाक्यानामानर्थक्यं निरर्थकत्वं तस्मादनित्यमनियतं वेदानां प्रामाण्यमुच्यत इति । एवं प्राप्ते सिद्धान्तसूत्रं 'विधिना त्वेकवाक्यत्वा'दिति । अथ प्रथमपादस्थतद्भूताधिकरणस्थसूत्रं 'तद्भूतानां क्रियार्थेन समन्वय' इति । तत् तेषु वेदवाक्येषु भूतानां सिद्धार्थप्रतिपादकानां वाक्यानां क्रियार्थेन क्रियाप्रतिपादकेन वाक्येन 'बर्हिषि रजतं न देयं' 'पशुना यजेत' 'वायव्यं श्वेतमालभेते'त्यादिना सहान्वयः । तथाच विधिप्रत्ययरहितवाक्यानां विधिवाक्ये सन्निहितैर्दूरस्थैर्वा सह विधिवाक्याकाङ्क्षितनिन्दाप्रशंसाद्यर्थपूरणेनान्वये कृते सर्वस्य वेदस्य क्रियापरत्वसिद्ध्या निरर्थकत्वनिरासेन प्रामाण्य

न । 'एकमेवाद्वितीयं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' 'अचक्षुरश्रोत्र'-मित्येवं तद्विपरीतात्मप्रतिपादनात् । नह्यद्वितीयपरमानन्दरूपस्य कर्माङ्गत्वं युज्यते । अननुमतं चैतद्वार्तिककृतः । कथम्—'सर्वत्रैव

सिद्धम् । अध्ययनविधिपरिगृहीते सर्वस्मिन्वेदे कस्यापि वाक्यस्यानर्थक्यासंभवात् निरर्थकाध्ययनविध्यनुपपत्तेरित्यर्थः । उपनिषदामपि तत्त्वमसीत्यादिवाक्यानामपि । तदेव विधिवाक्यान्वितत्वमेव युक्तम् । एतेनेति । क्रियारहितवाक्यानां क्रियान्वयाकाङ्क्षावतां क्रियापरवाक्यापेक्षितार्थबोधनेन निराकाङ्क्षत्वमिति न्यायेनोपनिषदां तत्त्वमस्यादिवाक्यानामपि क्रत्वर्थो यज्ञाङ्गभूतो यः कर्ता यजमानस्तस्य प्रतिपादनमीश्वराभेदेन स्तुत्या निरूपणं तेन नैराकाङ्क्ष्यं क्रियान्वयेन क्रियाकाङ्क्षारहितत्वं व्याख्यातं स्पष्टीकृतं वेदितव्यमित्यर्थः । 'आदित्यो यूप' इत्यादिवाक्यैः सूर्यत्वादिना यूपादिः स्तूयते स च पशुनियोजनादिना क्रियास्वन्वेति एवमीश्वराभेदबोधकैरुपनिषद्वाक्यैर्यजमानः स्तूयते स च कर्तृत्वेन क्रियास्वन्वेतीति भावः । श्लोकाद्बहिरेव सिद्धान्तमाह—नेति । नह्यद्वितीयेति । स्तुतिर्हि स्तोतृप्रवृत्त्यर्था, अद्वितीयत्वबोधे तु स्वर्गादिभोग्यभोक्त्रादिद्वैतस्य करणकर्मसंप्रदानादिकारकद्वैतस्य च बाधान्न प्रवृत्तिः । एवं परमानन्दरूपत्वबोधे क्षुद्रस्वर्गानन्दाद्यर्थं न प्रवृत्तिः । तथा चक्षुरादीन्द्रियरहितत्वबोधेऽन्धबधिरादितुल्यत्वापत्त्या कर्तृत्वभोक्तृत्वासंभवाच्च प्रवृत्तिः सिध्येदिति भावः । सर्वत्रैव हि विज्ञानमिति । सर्वत्र वेदे विज्ञानं तत्तद्वेदवाक्यजन्यं द्रव्यदेवताकर्मादिविषयं ज्ञानं संस्कारत्वेन गम्यते संस्काररूपं भवति । अतएव मीमांसकैः व्रीह्यवघातप्रोक्षणादिसंस्कारवत्परस्य यागादेरर्थं च गम्यते । एवं हि पूर्वमीमांसककृतिसिद्धान्तः—'स्वाध्यायोऽध्येतव्य' इति विहितस्य वेदाध्ययनस्य वेदार्थज्ञानं फलं न तु स्वर्गादि । दृष्टे फले संभवत्यदृष्टकल्पनाया अन्याय्यत्वात् अवघातादेरिव तुषविमोकादि । तच्च द्रव्यदेवतादिविषयकं वेदाध्ययनेन संपाद्यं ज्ञानं पौरुषग्रन्थादिनापि स्यादिति पुनरध्ययनवैफल्ये प्राप्ते वेदाध्ययनेनैव देवतादिज्ञानं संपादनीयमिति नियमः स्वीकार्यः, न तु विद्वत्पाठादिनापि वैतुष्ये सिद्धेऽवघातादेरेवेति नियमवत् । तथा च यथावघातेन वैतुष्ये कृते तण्डुलेषु कश्चन संस्कारो भवति न तु नखविदलनादिना, तथा वेदा-

[illegible] सहिता उपनिषज्जन्यात्मज्ञानं संस्काररूपं कर्माङ्गं च [illegible] । [illegible]

हि विज्ञानं संस्कारत्वेन गम्यते । पराङ्गं चात्मविज्ञानादन्यत्रेत्यव-
धार्यता'मिति तेनैवोक्तत्वात् । एतदर्थमेव मननाय मुनयः पर्यटन्ती-
त्युक्तम् । तत्र तावत् द्वैतस्य सत्यत्वे भवेदप्येवं, तदेव तु न संभ-
वतीति प्रश्नोत्तराभ्यां मननेन तत्त्वावधारणप्रकारमाह—सत इद-

---

मयनेन द्रव्यदेवतादिविषयकज्ञाने संपादिते द्रव्यदेवतादिषु तादृशज्ञानजन्यः कश्चन
संस्कार उत्पद्यते तत्संस्कृतदेवतादिस्मरणादिना स्वर्गाद्यपूर्वसिद्धिर्नतु पीठपवाक्या-
दिजन्यज्ञानेन । एवं यागकाले पठ्यमानमन्त्राणामपि देवताकर्मादिविषयं ज्ञानमेव
दृष्टफलं नत्वदृष्टमपूर्वम् । अत्रापि पूर्ववत् स्मरणादिना ज्ञानसिद्धौ नियमविधिना सं-
स्काररूपत्वकल्पनं पूर्ववत् । एवञ्च सर्वत्र वेदे जायमानं ज्ञानं संस्काररूपं सिद्धं, सं-
स्कारस्य च स्वतः फलवत्त्वाभावात् फलवतो यागस्याङ्गत्वमिति पराङ्गत्वं च सिद्धम् ।
**आत्मविज्ञानादन्यत्रेति** । उपनिषज्जन्यात्मविज्ञानविना उपनिषज्जन्यात्मज्ञानं
संस्काररूपं यज्ञादिकर्माङ्गं च नेत्यर्थः । उपनिषज्जन्यात्मज्ञानस्य कर्माङ्गत्वाभावा-
त्कर्मकर्त्रा यजमानेनोपनिषद्विचारो न कार्य इति भावः । ननूपनिषदज्ञानस्य
कर्मानङ्गत्वे स्वर्गातिरिक्तमोक्षानङ्गीकारात् सर्वशाखागतोपनिषद्भागवैयर्थ्यमिति वा-
च्यम् । देहात्मभ्रान्तिमतां जन्मान्तरभोग्यस्वर्गादिफलकर्मसु प्रवृत्त्यभावे प्राप्ते
तद्भ्रान्तिनिरासार्थमुपनिषदामावश्यकत्वात् देहाद्यात्मभ्रान्तिरहितं प्रति यजमानविशेषं
उपनिषद्वैयर्थ्यमिष्टमेव । अतएवोपनिषदज्ञानं नाङ्गम् । अङ्गं हि नियतं नतु
पाक्षिकं यथाऽवघातादि । औपनिषदात्मज्ञानंतु भ्रान्तिमत्पुरुषं प्रत्येवोपयुक्तं न सर्वं
प्रतीति पाक्षिकमिति न तस्य कर्माङ्गत्वमिति वार्तिकाशयः । एवं तत्तुल्यत्वेनात्मज्ञानस्य
संस्कारत्वाङ्गत्वाभावे सिद्धे क्रियापरत्वमप्युपनिषदां मास्तु फलवदज्ञातार्थकत्वेन
स्वार्थपरत्वोपपत्तिरिति सिद्धान्ताशयः । यत्तु केचन मीमांसकाः पत्न्यवेक्षितमाज्यं
भवतीति यथोपांशुयागे उपयोक्ष्यमाणाज्यस्य पत्नीकर्तृकचाक्षुषज्ञानं संस्कारः एवं
यागं करिष्यतः पुंसोऽहं ब्रह्मास्मीत्यौपनिषदवाक्यानुसारेणावेक्षणं संस्कार इति
संकल्पयन्ति । एतत् शारीरकभाष्ये एवानारभ्याधीतस्यात्मज्ञानस्य यज्ञकर्तृसंस्का-
रतयाङ्गत्वं न युज्यत इत्यादिना विस्तरेण दूषितं तत एव द्रष्टव्यम् । पूर्वश्लोकेन
सङ्गत्यर्थमाह—**एतदर्थमेवेति** । न क्रियापरत्वेनैव सर्वस्य वाक्यस्य प्रामाण्यं
किन्तु फलवदज्ञाताबाधितार्थपरत्वेनेत्र । कूपसम्मुखं गच्छन्नयमन्धः कूपे पतेदिति

मुत्थितं सदिति चेदिति । इदं विश्वं धर्मि, सदिति साध्यो धर्मः, सत उत्पन्नत्वात् हेतुः, यद्यत् उत्पन्नं तत्तदात्मकमेव दृष्टम्, यथा कनकादुत्पन्नं कुण्डलादि तदात्मकं तद्वदिति । तत्र यदि सद्भेदः साध्यते तदा अपादानत्वनिर्देशेनैव भेदप्रतीतेर्विरुद्धो हेतुरित्याह—

---

वाक्यानां विधिनिषेधरहितानामपि प्रामाण्यदर्शनादित्यादिनिश्चयस्य बहुमननं विना दुर्घटत्वादिति भावः । एवं श्लोकाद्बहिरेव मीमांसकपूर्वपक्षं निरस्य मननप्रकारान्तरेण श्लोकाक्षरैरपि निरसितुमाह—तत्र तावदिति । द्वैतस्य भोक्तृत्वभोग्यरूपस्य कर्तृक्रियाकारकरूपस्य च सत्यत्वे अबाध्यत्वे एव स्वर्गादिफलकस्य कर्मणः परमपुरुषार्थहेतुत्वेन सर्ववेदस्य क्रियापरत्वं भवेदपि, द्वैतस्य सत्यत्वमेव तु न संभवतीति प्रकारान्तरेण निवृत्तिपरत्वरूपवेदतत्त्वनिश्चयाय प्रश्नोत्तराभ्यां मननं दर्शयतीत्यर्थः । इदंपदोक्तं विश्वं धर्मि पक्षः, सदिति साध्यं, सत उत्थितमिति हेतुगर्भितं विशेषणमिति सत उत्पन्नत्वादिति हेतुः फलति । ननु मीमांसकमते आकाशादेः स्वर्गादेश्चोत्पत्त्यभावादुत्पत्तिमतामपि केषांचिद्भोग्यजातानां प्रकृत उत्पत्त्यनङ्गीकाराच्च कथमिदमनुमानं मीमांसकानामुभयवादिसिद्धहेत्वभावादिति चेन्न । क्वचित्परवादिमात्रसिद्धस्यार्थस्य हेतूकरणदर्शनाद्वेदान्तिमतसिद्धमेव सत उत्पन्नत्वं हेतूकृत्यैतत्पूर्वपक्षोत्थानात् । तत्र सिद्धान्ती—किं विश्वं सदित्यनेन विश्वं सदभिन्नं सत उत्पन्नत्वादिति सद्भेदः साध्यते, किंवा विश्वं सद्भिन्नं नेति सत्प्रतियोगिकभेदाभावः साध्यते, इति विकल्पं मनसि निधाय प्रथमपक्षे दूषणमाह—तत्र यदि सद्भेद इति । ननु अभेदो भेदाभावरूप एव, न भेद अभेद इति नञोऽभावार्थकत्वादिति चेन्न । असुराधर्मादिपदेष्विव नञो विरोधार्थकत्वात्, सुरविरोधी असुरो धर्मविरोधी चाधर्मो भावरूपी भेदविरोधी अभेदः कथन साध्यपक्षधर्मविशेषणस्थापने च सर्वथा भावरूपैक्यसिद्धिरित्यभ्युपगमात् । विरोधश्च भेदाभेदयोस्तेजस्तिमिरयोरिव सहानवस्थानलक्षण इति सत उत्पन्नत्वादित्यपादानपञ्चमीनिर्देशेन सत्प्रतियोगिकभेदप्रतीतौ तत्राभेदप्रतीतिर्न भवति इति विरुद्धो

ननु तर्कहतमिति । ननु नाभेदं साधयामः किंतु तदुत्पन्नत्वेन कुण्डलादिवद्भेदं प्रतिषेधयामः तत्र अभेद एव स्यादित्याशङ्क्याऽनैकान्तिकत्वेन दूषयति—व्यभिचरति कचेति । पितृपुत्रादिषु मुद्गरघटप्रध्वंसादिषु च तथा दर्शनादिति भावः । ननु तदुत्पन्नत्वं नाम तदुपादानत्वं नतु तन्निमित्तत्वमतो नानैकान्तिकत्वमित्याशङ्क्य दूष-

---

तत्राभेद एवेति सद्भेदनिषेधे जगति सत्यत्वमेव सिद्ध्येदित्यर्थः । नचात्र पक्षेऽपादाननिर्देशेन जाताऽभेदप्रतीतिर्भेदनिषेधस्य विरोधिनीति शङ्क्यम् । यथा कनकादुत्पन्नं कुण्डलमित्यत्रापादानत्वेन कार्यत्वेन च जाता भेदप्रतीतिः कनककुण्डलयोः सुवर्णत्वेन भेदनिषेधसाधने विरुद्धा न भवति तथा सत उत्पन्नत्वादित्यनेन कार्यत्वेन कारणत्वेन च जाता भेदप्रतीतिः सत्यत्वेन रूपेण सत्कारणजगत्कार्ययोर्भेदनिषेधसाधने विरुद्धा नेत्याशयात्।अभेदसाधने च सर्वथैक्यसिद्धौ कार्यत्वकारणत्वरूपभेदोऽपि विरुद्ध इति तत्र विरुद्धो हेतुरिति युक्तमुक्तमिति दिक् । अनैकान्तिकत्वेनेति । सव्यभिचारोऽनैकान्तिक इति पञ्चविधहेत्वाभासान्तर्गतप्रथमहेत्वाभासत्वेन दूषयतीत्यर्थः । सद्धेतुना हि साध्यसिद्धिर्नत्वसद्धेत्वाख्यहेत्वाभासेन । सद्धेतुत्वं च सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधितेति पञ्चविधहेत्वाभासभिन्नत्वम् । व्यभिचरति कचेति । हेतुसत्त्वे साध्यासत्त्वं व्यभिचारः । यथा पर्वतो वह्निमान् द्रव्यत्वादित्यत्र द्रव्यत्वं जलादौ तत्र साध्यस्य वह्नेरभावाद्व्यभिचारः । तथा विश्वं सद्भिन्नं न, सत उत्पन्नत्वात् । यत् यत उत्पन्नं तत्ततो भिन्नं न, यथा कनकादुत्पन्नं कुण्डलं कनकान्न भिन्नमिति सामान्यमुख्यव्याप्तौ पितुरुत्पन्ने पुत्रे दण्डप्रहारादुत्पन्ने घटादिप्रध्वंसे च सत उत्पन्नत्वरूपहेतुसत्त्वेऽपि भेदाभावरूपसाध्यासत्त्वाद्व्यभिचारः, क्षत्रियादेर्वैश्यद्ब्राह्मण्यादौ जाते यज्ञदत्ते क्षत्रियत्वसुतत्वादिना देवदत्तयज्ञदत्तत्वादिना च भेदात् मुद्गरघटध्वंसादेर्भावत्वादिना भेदात् । नन्वत्रापि मनुष्यत्वादिनाऽभिधेयत्वादिना च भेदो नेतिचेत् जगति मिथ्यात्वसत्त्वेऽपि भासमानत्वादिना भेदनिषेधसंभवाच्च सत्यत्वसिद्धिः । भासमानत्वं हि स्फुरतीत्यादिप्रतीत्यास्पदत्वरूपं घटादि जगति ब्रह्मणि चास्तीति गूढाशयः । ननु विश्वं सतोऽभिन्नं सदुपादानकत्वात् यद्यदुपादानकं तत्ततो न भिन्नमिति विवक्षणे पुत्रे पितुः प्रध्वंसे मुद्गरस्य च निमित्तत्वेनोपादानत्वाभा-

यति—क्व मृषेति । गुणोपादानस्यापि फणिनो न गुणत्वं किंतु मिथ्यात्वम्, अन्यथा कुण्डलादिवद्बाधप्रसङ्गात् अतः पुनरप्यनैकान्तिकत्वमेवेति भावः । ननु न तत्र केवलं गुणमात्रं फणिन उपादानं किंतु अविद्यायुक्तम्, तथाभूतस्यावस्तुत्वादुक्तं फणिनो मिथ्यात्वमित्याशङ्क्य तत्तुल्यमत्रापीति दूषयति—न तथोभययुगिति । अयमर्थः—अत्राप्यविद्यायुक्तस्यैव सत उपादानत्वम् । एवंभूतस्य च न वस्तुसत्त्वम् । अतः सदुपादानत्वमसिद्धमिति न वस्तुसत्त्वं प्रपञ्चस्येति । ननु माभूदनेन हेतुना प्रपञ्चस्य सत्त्वं हेत्वन्तरेण तु साधयामः । तथाहि सदिदमर्थक्रियाकारित्वात्, न यदेवं न तदेवं यथा शुक्तिरजतमिति तत्राह—व्यवहृतये विकल्प इषित इति । व्यवहाराय अर्थक्रियार्थं विकल्पो भ्रम इषित इष्ट एव,

धातदुपादानकत्वहेतोरसत्सर्पे व्यभिचार इति शङ्कते—नन्विति । गुणोपादानस्येति । रज्ज्वारोपितत्वेन रज्जूपादानके सर्पे व्यभिचारः रज्जोर्व्यावहारिकसत्त्वात्सर्पस्य मिथ्यात्वेन तद्भेदादित्यर्थः । अन्यथा सर्पस्य व्यावहारिकसत्त्वे बाधो न स्यात् । ननु सदुपादानत्वपदेन सन्मात्रोपादानत्वं विवक्षते तथाच सन्मात्रोपादानकं यत्तत्तो न भिन्नमिति व्याप्तेर्न रज्जुसर्पे व्यभिचारः । रज्जुसर्पस्याज्ञानगुणरज्जूपादानकत्वेन रज्जुमात्रोपादानकत्वाभावान्मिथ्यात्वं युक्तमिति शङ्कते—ननु न तत्रेति । तुल्यमत्रापीति । अविद्यायुक्तब्रह्मण उपादानत्वात्सन्मात्रोपादानत्वं हेतुर्जगति नास्त्यसिद्ध इति जगतो मिथ्यात्वमेव युक्तमित्यर्थः । न तथोभययुगिति । उभाभ्यां सदविद्याभ्यां कारणाभ्यां युक्तमिदं जगत् अतः सन्मात्रोपादानकत्वहेतोरसिद्धेरपि तथा न, परं नेत्यर्थः । ननु 'सदेव सोम्येदमग्र आसी'दिति सन्मात्रोपादानत्वश्रुतेर्नासिद्धिरिति शङ्कायामाह—अयमर्थ इति । अविद्यायुक्तस्यैवेति । 'देवात्मशक्तिं स्वगुणैर्निगूढा'मिति श्रुतेरविद्यायुक्तस्य ब्रह्मण उपादानत्वं सिद्धान्तेऽप्यङ्गीकृतमित्यर्थः । सन्मात्रोपादानत्वश्रुतिरपि विवर्ताधिष्ठानत्वपरेति भावः । अर्थक्रियाकारित्वादिति । अर्थः प्रयोजनमुदकाहरणादि तस्य क्रिया निर्वृत्तिः ।

१ शिव वर्मा स्व..

टकार्षापणादिनापि क्वचिद्व्यवहारदर्शनात् । नन्वेकत्र सतोऽन्यत्रारोपो भ्रमः प्रसिद्धः । अत्यन्तासत्त्वे कथं प्रपञ्चो भ्रमः स्यात् सत्त्वे वा नाद्वैतसिद्धिः । उक्तंच भट्टैः—'अध्यस्यते खपुष्पत्वमसत्कथमवस्तुनि । प्रज्ञातगुणसत्ताकमध्यारोप्येत वा नवे'ति, नेत्याह—अन्धपरम्परयेति । अन्धपरम्परया यो विकल्प इत्यन्वयः । अयं भावः—संस्कारजन्यो भ्रमः संस्कारसिद्धये पूर्वप्रतीतिमात्रमपेक्षते

---

तथाच विश्वं सत् तत्तत्प्रयोजननिर्वाहकारित्वात् यदसत् तत्प्रयोजननिर्वाहकं न, यथा शुक्तिरजतादीत्यर्थः । कूटकार्षापणेति । कूटमविकारि खण्डरहितं यत्कार्षापणं षोडशमाषादिपरिमितं सुवर्णमुद्रादि तेनाखण्डेनापि पादादिभागारोपेण क्रयादिव्यवहारदर्शनात् । आदिपदेन स्वप्नात्मनासर्पादिना सत्यस्य शुभभयादेर्भाविशुभाशुभज्ञानस्य च दर्शनं शङ्काविषादिना मरणादिकं च गृह्यते । नन्वेकत्रेति । हट्टपत्तनादौ बिलादौ च सत्यस्य रजतसर्पादेरन्यत्र शुक्तिरज्ज्वादावारोपो भ्रमः । प्रपञ्चस्यानारोपितस्य ब्रह्मणोऽन्यत्राधिष्ठाने सति द्वैतापत्तिः । असत्त्वे तस्य खपुष्पतुल्यत्वेन कथं ब्रह्मणि तदारोप इत्यर्थः । अत्यन्तासतोऽत्यन्तासत्यधिष्ठाने चारोपो नेत्यत्र भाट्टवार्तिकमाह—अध्यस्यत इति । असत् क्वाप्यदृष्टं खपुष्पं कथमध्यस्यते । अवस्तुनि अत्यन्तासत्यधिष्ठाने वा कथं रजतादिकमध्यस्यते । न कथमपीत्यर्थः । उत्तरार्धे प्रथमं वापदं चार्थे । प्रज्ञातोऽनुभूतो गुणो रूपादिः सत्ता सद्भावश्च यस्य तत् प्रज्ञातगुणसत्ताकं रजतादिकं, चार्थकवापदेन प्रज्ञातो गुणश्चाकचक्यादिः सामान्यधर्मः सत्ता पुरोवर्तित्वादिकं च यस्य तस्मिन्नधिष्ठाने चाध्यारोप्यते । करणदोषविषयदोषेन्द्रियसंप्रयोगादिकारणसामग्र्यभावे तु नवारोप्यते । प्रज्ञातगुणसत्ताकमेव वस्तु प्रज्ञायमानगुणसत्ताक एवाधिष्ठानेऽध्यारोप्यत इति नियमद्वयम्, आरोप्यत एवेति न नियम इत्यर्थः । अन्यत्राधिष्ठानेऽत्यन्तासतो जगतो वाङ्मनसायगोचरे ब्रह्मणि कथमारोप इति भावः । वस्तुसत्त्वं विषयसत्यत्वं तथाच भ्रमहेतुसंस्कारसिद्ध्यर्थं यथार्थज्ञानं नापेक्ष्यते । भ्रान्तिज्ञानेनापि संस्कारसिद्ध्या तादृशसंस्कारमात्रेणोत्तरत्र भ्रमसिद्धेरित्यर्थः । यदभावे यदभाव इति व्यतिरेकनिश्चयेन कारणत्वनिश्चयः । प्रकृते व्यतिरेकादर्शनान्न वस्तुसत्त्वस्य भ्रमकारणत्व

न वस्तुसत्त्वम् । प्रतीतौ सत्यां वस्तुसत्त्वाभावेन भ्रमव्यतिरेकादर्शनात् । अतोऽनादित्वात्पूर्वपूर्वभ्रमदृष्टस्योत्तरोत्तरं आरोपो भविष्यति । अन्धपरम्परान्यायेन व्यवहारः सेत्स्यतीत्यप्रयोजको हेतुरिति । ननु 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' 'अपाम सोममभृता अभूमे'त्यादिभिः कर्मफलस्य नित्यत्वप्रतिपादनाद्सत्त्वं न घटते, नहि नित्यवस्तु असद्भवति, तस्माद्वेदप्रतिपादितत्वात् द्वैतं सदेवेत्याशङ्क्याह—भ्रमयतीति । हे भगवन्, ते भारती वेदलक्षणा उरुवृत्तिभिर्बह्वीभिर्गौणलक्षणादिवृत्तिभिरुक्थजडान् कर्मश्रद्धाभराक्रान्तमन्दमतीन् भ्रमयति मोहयति । अयं भावः—नहि वेदः कर्मफलं नित्यमभिप्रैति किंतु लक्षणया प्राशस्त्यमात्रम्, विध्येकवाक्यत्वात्, अन्यथा

---

निश्चय इत्याह—प्रतीतौ सत्यामिति । वस्तुसत्त्वाभावेन विषयसत्त्वाभावेन भ्रमव्यतिरेकस्य भ्रमाभावस्यादर्शनात् । गुञ्जापुञ्जे वह्निभ्रमाहितसंस्कारेणापि पुनस्तत्रैव गुञ्जापुञ्जादौ भ्रमपरम्परादर्शनादित्यर्थः । इन्द्रियागोचरस्यापि ब्रह्मणः स्वयंप्रकाशत्वेन स्फुरमाणत्वादारोपाधिष्ठानत्वं युक्तं, इन्द्रियागोचरेऽपि नभसि साक्षिभास्ये नीलं नभ इत्यारोपदर्शनात्, अधिष्ठानारोप्ययोरेकत्र ज्ञाने स्फुरमाणत्वमेवाव्याप्तव्यापकं नत्वधिष्ठानस्येन्द्रियगोचरत्वमारोप्यस्य वस्तुनः सत्त्वं वा व्यापकं व्यभिचारादिति भावः । अन्धपरम्परान्यायेनेति । दृढ घटे पशो दृष्ट इति केनचिदन्धेनान्ध उपदिष्टस्तेनान्यस्तेनान्य इति परम्परायां यथाभ्रमः पूर्वपूर्वभ्रमजन्य एव न कस्यचिदपि प्रमा तेन च मूर्छामरणाद्यर्थक्रियापि दृश्यते तद्वदित्यर्थः । अप्रयोजको हेतुरिति । अर्थक्रियाकारित्वं हेतुरस्तु सत्त्वं साध्यमस्त्वित्युक्तेऽनुकूलतर्काभावात्साध्यनिश्चयस्य प्रयोजकः कारणं नेत्यर्थः । अक्षय्यमिति । चातुर्मास्यनामकयागकर्तुः सुकृतं यागजनितं स्वर्गादिफलं भोगेन कालेन वाऽक्षेतुमशक्यमनन्तफलत्वात्क्षीणकारादित्यर्थः । अपामेति । सोमं अपाम पिबाम तेन चाऽमृता नाशरहिता अनन्तकालं स्वर्गभोक्तारो जाताः स्मेति क्रमेण भोग्यभोक्तृद्वैतनित्यत्वश्रुतिः । लक्षणयेति । यथा 'प्रजापतिरात्मनो वपामुदखिदद'दित्यर्था-

वाक्यभेदप्रसङ्गात् । 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयत' इति न्यायोपबृंहितश्रुत्यन्तरविरोधाच्च,

---

क्येन स्ववपोत्खादनरूपस्वार्थं परित्यज्य जहल्लक्षणया पशुयागप्राशस्त्यमात्रं बोध्यते, एवमक्षय्यादिवाक्यैः स्वार्थत्यागेन चातुर्मास्ययागप्राशस्त्यमात्रमुच्यते नतु फलनित्यत्वमिति । मीमांसकैः स्वार्थबोधनपूर्वकविध्यन्वयस्यार्थवादेष्वनङ्गीकारात् । सर्वथा स्वार्थत्यागस्यैवाङ्गीकारात् । तदुक्तं भगवता जैमिनिना 'विधिनात्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्यु'रिति । तदाह—**विध्येकवाक्यत्वादिति**। सर्वविधिवाक्यैः शीघ्रप्रवृत्तिसिद्ध्यर्थमेकरूपेण प्राशस्त्यबोधनमेवापेक्ष्यते । फलनित्यत्वादिनानार्थापेक्षणे वैरूप्यापातात् । विध्यपेक्षितार्थबोधने हि विधिवाक्येनैकवाक्यत्वसिद्धिः । अन्यथा विध्यपेक्षितप्राशस्त्यबोधनं विहाय विध्यनपेक्षितस्वर्गादिनित्यत्वबोधने विध्येकवाक्यत्वासंभवेन वाक्यभेदः प्रसज्यते । ननु देवताधिकरणोक्तवेदान्तसिद्धान्ते भूतार्थवादरूपाणां 'इन्द्रो वृत्राय वज्रमुदयच्छ'दित्यादिवाक्यानां स्वार्थेऽपि प्रामाण्यं स्वीकृतं तद्वदक्षय्यादिवाक्येष्वस्त्विति शङ्कायामाह—**तद्यथेहेति** । यागादिपुण्यकर्मसंपादितः स्वर्गादिः क्षयिष्णुर्भवितुमर्हति कर्मसंपादितत्वात् कृष्यादिकर्मचितसस्यादिवदित्यनुमानगर्भितश्रुत्यन्तरविरोधात् । युक्तिरहिताक्षय्यश्रुतिर्गुणवादरूपैव—'विरोधे गुणवादोऽस्या अनुवादोऽवधारिते । भूतार्थवादस्तद्धाना' दित्युक्तेः गुणवादानुवादयोश्च न स्वार्थे प्रामाण्यमिति भावः । ननु 'आत्मन आकाशः संभूत' इत्यादिसृष्ट्यादिश्रुतिभिरेव नानाविधद्वैतप्रतिपादनात्कथं जगन्मिथ्येत्याशङ्कायामाह—**एतेनेति** । **अन्यपरत्वमिति** । 'नेह नानास्ति किंचन' 'अथात आदेशो नेतिनेति' 'अस्थूलमणु' इत्यादिनिषेधवाक्यापेक्षितनिषेध्यसमर्पकत्वं सृष्टिवाक्यानां अथवा ब्रह्मणि प्रपञ्चनिषेधेऽन्यत्र सत्त्वशङ्का स्यात् ब्रह्मोपादानलोकस्या उपादानादन्यत्र कार्यसत्तानिषेधे सिद्धे ब्रह्मण्यपि तन्निषेधे निःशङ्कमद्वैतसिद्धिरिति सृष्टिश्रुतिभिः सर्वप्रपञ्चस्य ब्रह्मोपादानकत्वं श्राव्यत इत्यद्वैतपरत्वमेव सृष्टश्रुतीनामित्यर्थः । **उद्भूतमिति** । सद्रूपादपि भवत उत्पन्नं विश्वं सन्नैव सत्यं नैव । यथा व्यावहारिकासत्यायाः उत्पन्नः सर्पो व्यावहारिकसत्यो न किंतु मिथ्यैव । कूटसुवर्णं कार्यमर्थक्रियां कुर्वदपि भवति । ततोऽर्थक्रियाकारित्वेनापि हेतुना विश्वं सन्न । अक्षय्यादिवाक्यरूपः सृष्ट्यादिवाक्यरूपश्च वेदोऽपि एवंपरः विश्वसत्यत्वपरो न, ततएव सर्वो वेदः क्रियापर इत्यपि नेति भावः । एवमद्वैते पारमार्थिकेऽपि सति अहं सेव्यसेवक-

न यदिदमग्र आस न भविष्यदतो निधना-
दनुमितमन्तरा त्वयि विभाति मृषैकरसे ।
अत उपमीयते द्रविणजातिविकल्पपथै-
र्वितथमनोविलासमृतमित्यवयन्त्यबुधाः ॥ २४ ॥ ३७ ॥

---

अतः कर्मजडानामिदं भ्रममात्रमिति । एतेनैव 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादीनामप्यन्यपरत्वं दर्शितं भवति ॥३६॥

उद्भूतं भवतः सतोऽपि भुवनं सन्नैव सर्पस्स्रजः
कुर्वन्कार्यमपीह कूटकनकं वेदोऽपि नैवंपरः ।
अद्वैतं तव सत्परं तु परमानन्दं पदं तन्मुदा
वन्दे सुन्दरमिन्दिरानुत हरे मा मुञ्च मामानतम् ॥ २३ ॥

तदेवं प्रपञ्चस्य सत्त्वे साधकं नास्तीत्युक्तम् । इदानीमसत्त्वे सृष्टिप्रलयश्रुतयो 'यतो वा इमानि भूतानि जायन्ते' इत्याद्यास्तन्मूलं चानुमानं प्रमाणमित्याह—न यदिदमिति । यद्यस्मात् 'आत्मा वा इदमेक एवाग्र आसी'दित्यादिश्रुतेः नच निधनात् प्रलयात् अनु अनन्तरं भविष्यत् भविष्यति । 'नासदासीन्नो सदासीत्तदानी'मित्यादिश्रुतेः । अतः कारणात् अन्तरा मध्येऽपि एकरसे केवले त्वयि मृषा मिथ्यारूपमेव विभातीत्यनुमितं निश्चितम् । यत एवमतः

---

मायाविद्धितकल्पनया भजे, तमपि मां मा मुञ्च नाथं मद्भिन्नो नापि दुःखादिसंसार-माद् सद्धदैव मिथ्यैवाकोपकाकीलद्वैतरूपया मां नोपेक्षसेत्यर्थः ॥ २३ ॥ ३६ ॥

मृल्लोहकार्ष्णायसेति । मृत्तिकासुवर्णायोमयावयवेत्यर्थः । यथा सोम्येति । एकेन कारणभूतेन मृत्पिण्डेन विज्ञातेन सर्वं तत्कार्यं घटशरावादि विज्ञातं स्यात् । कथमित्यपेक्षायामाह—वाचारम्भणमिति । नामधेयं नामैव, घटादिविकारः केवलं नामैव, अतएव वाचारम्भणं वाचैव, कैवल्यमारभ्यते व्यवहि-

श्रुत्वा द्रविणजातिविकल्पपथैः द्रविणजातीनां द्रव्यमात्राणां मृल्लोह-कार्ष्णायसरूपाणां विकल्पा भेदा घटकुण्डलादयस्तेषां पन्थानो मार्गाः प्रकारास्तैरुपमीयते सदृशतया निरूप्यते । यथा तत्र कार्यकारणानां नामधेयमात्रताकारणं मृदाद्येव तु सत्यम्, तथाऽत्राप्याकाशादीनां नाममात्रता ब्रह्मैव सत्यम् । तथाच श्रुतिः—'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं भवति वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं यथा एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् यथा एकेन नखनिकृन्तनेन सर्वं कार्ष्णायस'मित्यादि, तस्मादस्य सत्त्वे प्रमाणस्य विद्यमानत्वात् वितथमनोविलासभूतं सत्यमिति ये श्रयन्ति जानन्ति ते अबुधाः । अज्ञा इत्यर्थः । अत्रैवं प्रयोगः—विवादाध्यासितं न सत् आद्यन्तयोरविद्यमानत्वात् विकारित्वाद्दृश्यत्वाच्च शुक्तिरजतादिवदित्यन्वयदृष्टान्तः । आत्मवदेवेति व्यतिरेकदृष्टान्तः ॥ ३७ ॥

मुकुटकुण्डलकङ्कणकिङ्किणीपरिणतं कनकं परमार्थतः ।
महदहंकृतिखप्रमुखं तथा नरहरे न परं परमार्थतः ॥ २४ ॥

---

यदेव, वागारभ्य नामातिरिक्तविकारः सत्यो नास्त्येव मृत्तिकैव सत्यं वस्तवस्तीत्यर्थः । लोहमणिना सुवर्णपिण्डेन । नखनिकृन्तनादिना कार्ष्णायसपिण्डेन विज्ञातेन तद्विकारभूतं क्षुरिकादि विज्ञातमित्यादि । विवादाध्यासितं सत्यं वा मिथ्या वेति विवादविषयीभूतं विश्वं न सत्यं आद्यन्तयोरविद्यमानत्वादित्यादि पृथग् हेतुत्रयम्, अन्वये शुक्तिरजतादिवत् व्यतिरेके आत्मवदिति ज्ञेयम् । मुकुटेति । मुकुटादिरूपेण परिणतं विकारभावं प्राप्तं सर्वं परमार्थतः कनकमेवेत्यर्थः ॥ २४ ॥ ३७ ॥

स यदजया त्वजामनुशयीत गुणांश्च जुपन्
भजति सरूपतां तदनु मृत्युमपेतभगः।
त्वमुत जहासि तामहिरिव त्वचमात्तभगो
महसि महीयसेऽष्टगुणितेऽपरिमेयभगः॥ २५ ॥ ३८॥

ननु यदि प्रपञ्चो नाम नास्त्येव सदाऽसवा तेन न चैतन्यस्य संबन्धगन्धोऽपि, तर्हि किमपराद्धं जीवेन यतोऽयं संसरति, किंवा बहुपुण्यमीश्वरस्य यतो नित्यमुक्तः, किंविपयं च तर्हि कर्मकाण्डमित्यपेक्षायां जीवेश्वरविशेषं 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिपस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति' 'अजामेकां लोहितशुक्लकृष्णा'मित्याद्या वदन्तीत्याह—स यदजयेति। सतु जीवः यद्यस्मात् अजया मायया अजामविद्यामनुशयीत आलिङ्गेत् ततो गुणांश्च देहेन्द्रियादीन् जुपन् सेवमान आत्मतया अध्यस्यन् तदनु तदनन्तरं सरूपतां तद्धर्मयोगं च जुपन् अपेतभगः पिहितानन्दादिगुणः सन्मृत्युं संसारं भजति प्राप्नोति तद्विपयमेव च कर्मकाण्डमिति भावः। त्वमुत त्वंतु जहासि तामजां मायाम्। ननु सा मय्येवास्ति कथं त्यागस्तत्राह—अहिरिव त्वचमिति। अयं भावः—यथा भुजंगः स्वगतमपि कञ्चुकं गुणबुद्ध्या नाभि-

---

स यदजया। द्वा सुपर्णेति। द्वा द्वौ जीवेश्वरौ सुपर्णा सुपर्णौ शोभनगमनवन्तौ सयुजौ बिम्बप्रतिबिम्बभावेन नित्यसंयुक्तौ सखायौ उपकार्योपकारकभावेन वर्तमानौ, यद्वा नित्यत्वेन समानस्वभावौ समानमेकं वृक्षं वृश्च्यते छेद्यते इति नाशवत्त्वेन वा प्रियाप्रियादिबहुफलकत्वपुण्यापुण्यादिबहुबीजवत्त्वादिना वृक्षपदवाच्यं शरीरं परिपस्वजाते। भोक्तृत्वेन नियामकत्वेन चैकं शरीरं श्रितवन्तावित्यर्थः। तयोर्मध्ये अन्यः एको देहत्रयतादात्म्याभिमानी अन्तःकरणप्रतिबिम्बो जीवः पिप्पलं कर्मफलं सुखादि स्वादु यथा तथा अत्ति भुङ्क्ते। अन्यः नित्यमुक्त ईश्वरः

यदि न समुद्धरन्ति यतयो हृदि कामजटा
दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः ।

---

मन्यते तथा त्वमजाम् । नहि निरन्तराह्लादिसंविरकामधेनुवृन्दपतेरजया कृत्यमिति तामुपेक्षस इति । कुत एवत्तदाह—आत्तभगः नित्यप्राप्तैश्वर्यः । महसि परमैश्वर्ये अष्टगुणिते अणिमाद्यष्टविभूतिमति महीयसे पूज्यसे विराजसे । कथंभूतः । अपरिमेयभगः अपरिमितैश्वर्यः । नह्यन्येषामिव देशकालादिपरिच्छिन्नं तवाष्टगुणितमैश्वर्यं अपितु परिपूर्णस्वरूपानुबन्धित्वादपरिमितमित्यर्थः ॥ ३८ ॥

नृत्यन्ती तव वीक्षणाङ्गणगता कालस्वभावादिभि-
र्भावान्सत्वरजस्तमोगुणमयानुन्मीलयन्ती बहून् ।
मामाक्रम्य पदा शिरस्यतिभरं संमर्दयन्त्यातुरं
माया ते शरणं गतोऽस्मि नृहरे त्वामेव तां वारय ॥२५॥

एवं तावदुक्तसाधनकदम्बेन ये भगवन्तं भजन्ति ते मृत्युं तरन्ति इतरे संसरन्तीत्युक्तम् । इदानीं ये बहिःसङ्गं परित्यज्य भगवन्मार्गे

---

अनश्नन् कर्मफलमचिद्रूपेण विराजत इत्यर्थ । **निरन्तरेति** । निरन्तरं सततमाह्लादिन्य आनन्दिन्य संविद स्वानन्दस्फुरणानि ता एव कामधेनुवृन्दानि तेषा पत्यु पालकस्य । नित्यसंविद एकत्वेऽपि कालभेदेन बहुत्वव्यपदेश । वृन्दाना पालन च नित्यस्फूर्त्या स्वस्मिन् संरक्षणम् । अजया मायया श्लेषेण छाग्या नहि कृत्यमिति । **परिपूर्णस्वरूपानुबन्धित्वादिति** । भगवत सर्वप्रकारकैश्वर्यस्य गुणाना च चतुर्भुजादिविग्रहस्य च चिद्रूपत्वान्मायाकार्यत्वाभावेन नित्यस्वरूपभूतत्वादित्यर्थ ॥ २५ ॥ ३८ ॥

**कामानिति** । कामान् विषयान् य ऽभ्यमयते प्रार्थयते मन्यमान दोषानादृत्य विषयगुणानेव चिन्तयन् स तै कर्मभि कामै धर्माधर्मप्रवृत्तिहेतुविषयेच्छारूपै सह तत्रतत्र योनिषु विषयप्राप्तिनिमित्त जायते । कामा कर्मसु प्रेरयन्ति

असुतृपयोगिनामुभयतोऽप्यसुखं भगवन्
अनपगतान्तकादनधिरूढपदाद्भवतः ॥ २६ ॥ ३९ ॥

प्रवृत्ता अपि कथंचिदन्तर्वान्ताशिनः कामान्न मुञ्चन्ति ते न भगवन्तं प्राप्नुवन्ति न चेह सुखं लभन्ते केवलं कुयोनीरेव प्राप्नुवन्तीति तान् शोचन् 'कामान्यः कामयते मन्यमानः' 'स कर्मभिर्जायते तत्रतत्रे'त्यादिश्रुत्यर्थमाह—यदि न समुद्धरन्तीति । हे भगवन्, ये यतयो हृदिस्थिताः कामजटाः कामस्य मूलानि वासनाः यदि न समुद्धरन्ति नोत्पाटयन्ति तेषामसतां भवान् हृदिगतोऽपि दुरधिगमः दुष्प्रापः । कथम् । अस्मृतकण्ठमणिः विस्मृतो यः कण्ठमणिस्तत्तुल्यः । स यथा कण्ठे वर्तमानोऽप्यस्मृतश्चेदप्राप्त इव भवति तद्वदिति । न केवलमेतावत् किंतु असुतृपयोगिनामिन्द्रियतर्पणपराणां योगच्छद्मनामुभयतोऽप्यसुखमिहामुत्र च दुःखमेव । तदाह—अनपगतान्तकात् अनिवृत्तान्मृत्योः लोकाराधनधनार्जनादिक्लेशात् भोगवैभवप्राकट्यभयाच्चेह तावद्दुःखं, भवत ईश्वरादपि दुःखम् । कथंभूतात् । अनधिरूढपदात् अनधिरूढं पदं स्वरूपं यस्य तस्मात् । स्वस्वरूपप्राप्त्यभावादविद्यावद्विषयत्वेन प्राप्तनिजधर्मातिक्रमनिबन्धनत्वद्दण्डरूपनरकप्राप्तेरमुत्राप्यसुखमित्यर्थः ॥ ३९ ॥

दम्भन्यासमिषेण वञ्चितजनं भोगैकचिन्तातुरं
संमुह्यन्तमहर्निशं विरचितोद्योगक्लमैराकुलम् ।
आज्ञालङ्घिनमज्ञमज्ञजनतासंमाननासन्मदं
दीनानाथ दयानिधान परमानन्द प्रभो पाहि माम् ॥ २६ ॥

---

तत्कर्मवशाच्च तैरेव कामैर्वेष्टितस्तत्रतत्र जायत इत्यर्थः । अनिवृत्तान्मृत्योरित्युपलक्षणमैहिकदुःखानामित्यभिप्रायेणाह—लोकाराधनेत्यादि ॥ २६ ॥ ३९ ॥

त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयो-
गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः ।
अनुयुगमन्वहं सगुण गीतपरम्परया
श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥ २७ ॥ ४० ॥

---

ननु यतेर्न किमपि कृत्यमस्ति प्रारब्धमेव सुखोपभोगेनापक्षप्यते अतः किमिति वृथा शप्यते उभयतोऽप्यसुखमिति । श्रूयते च 'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयानि'त्यादि तत्राह— त्वदवगमीति । हे सगुण षड्गुणैश्वर्ययुक्त, त्वदवगमी त्वज्ज्ञानवान् भवदुत्थशुभाशुभयोः भवतः कर्मफलदातुरीश्वराद्धेतोरुत्थयोराविर्भूतयोः शुभाशुभयोः प्राचीनपुण्यापुण्यकर्मणोः फलभूतान् गुणविगुणान्वयान् सुखदुःखसंबन्धान् न वेत्ति नानुसंधत्ते तर्हि तदानीं च देहभृतां देहाभिमानिनां प्रवृत्तिनिवृत्तिकरीर्गिरो विधिनिषेधलक्षणा न वेत्ति । विगतदेहाभिमानतया कार्याकार्यबोधाभावान्न नियुज्यत इत्यर्थः । युक्तं चैतत् । ततः कारणान्मनुजैरन्वहं श्रवणभृतः अनुदिनं श्रवणेन चेतसि धृतस्त्वं तेषामपवर्गगतिरपवर्गरूपा गतिर्भवसि । कथम् । श्रवणभृतः अनुयुगं प्रतियुगं या गीतपरम्परा उपदेशसंततिः तया । सत्संप्रदायानुसारेणेत्यर्थः । एतदुक्तं भवति—ये तावत्तत्त्वज्ञानिनः न तेषां कर्माधिकारशङ्काऽपि, ये चानवरतं त्वत्कथाश्रवणादिनिष्ठास्तेषामप्यासन्नमवत्पदानां न विधिनिषेधबाधः इतरेषां तु योगच्छद्मनेन्द्रियलालसानामुभयतोऽप्यसुखमिति ॥ ४० ॥

अवगमं तव मे दिश माधव स्फुरति यन्न सुखासुखसंगमः ।
श्रवणवर्णनभावमथापि वा नहि भवामि यथा विधिकिंकरः ॥२७॥

---

त्वदवगमी । एष इति । ब्राह्मणस्य ब्रह्मविदः महिमा माहात्म्यं नित्य एवरूपः । यतः पुण्यकर्मणा न वर्धते पापकर्मणा च नो कनीयान् क्षीणो न भवतीति ॥ २७ ॥ ४० ॥

द्युपतय एव ते न ययुरन्तमनन्ततया
त्वमपि यदन्तराऽण्डनिचया ननु सावरणाः ।
ख इव रजांसि वान्ति वयसा सह यच्छ्रुतय-
स्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ॥२८॥४१॥

त्वदवगमी न वेत्ति सुखदुःखे न च विधिनिषेधावित्युक्तं तत्र ननु कथमवगन्तुं शक्यते दुरधिगमत्वस्योक्तत्वादित्येवमाशङ्क्य सत्यमेवमनवगाह्यमहिम्नो वाङ्मनसागोचरत्वादविषयत्वेनैव ज्ञानमिति दर्शयन् 'यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं भवच्च भविष्यच्चे'त्यादिश्रुतिप्रतिपादितमपरिमितमहिमानमाह—द्युपतय एवेति । हे भगवन्, ते अन्तं द्युपतयः स्वर्गादिलोकपतयो ब्रह्मादयो न ययुः न प्रापुः । तत्कुतः । यदन्तवद्वस्तु तत्किमपि त्वं न भवसि । आस्तां द्युपतयो न ययुरिति । यद्यस्मात्त्वमपि आत्मनोऽन्तं न यासि । कुतस्तर्हि सर्वज्ञता सर्वशक्तिता वा अत आह—अनन्ततया अन्ताभावेन । नहि शशविषाणाज्ञानं सार्वज्ञ्यं तदप्राप्तिर्वा शक्तिवैभवं विहन्ति । अनन्तत्वमेवाह—यदन्तरेति । यस्य तव अन्तरा मध्ये । ननु अहो । साव-

---

द्युपतय एवेति । सहोवाच यदूर्ध्वमिति । । याज्ञवल्क्य उवाच । हे गार्गि, यत् ब्रह्म दिवः ब्रह्माण्डकटाहादूर्ध्वमुपरि, यच्च पृथिव्या अधस्तनाण्डकटाहादर्वाक् अधः, यच्च द्यावापृथिवी इमे अनयोर्द्यावापृथिव्योरन्तरा मध्ये भूतमतीतं भवत् वर्तमानं भविष्यत् वर्तमानादूर्ध्वकालभावि यत्सत् सर्वं यदधीनमाचक्षत इति । यस्यान्तरा मध्ये द्यावापृथिव्यौ भूतवर्तमानादिसर्वं जगच्चेति वा । 'ब्रह्मन्ब्रह्मण्यनिर्देश्ये'इत्यत्र पूर्वपक्षोक्तं पदार्थस्यैव वाक्यार्थत्वमिति नियमं दूषयते—कथं तर्हीति । पदस्य लक्षणयावृत्त्या शक्त्या वा योऽर्थः स वाक्येन बोधयितुं शक्यते । यः कयापि वृत्त्या पदेन न बोध्यः स कथं वाक्येन बोधनीय इत्यर्थः ।

रणाः उत्तरोत्तर दशगुणसप्तावरणयुक्ताः अण्डनिचया ब्रह्माण्डसमूहाः यान्ति परिभ्रमन्ति । वयसा कालचक्रेण खे रजांसीव । सह एकदैव नतु पर्यायेण । हि यस्मादेवमतः श्रुतयस्त्वयि फलन्ति तात्पर्यवृत्त्या पर्यवस्यन्ति नतु साक्षाद्वदन्ति अयमेतावानिति, सगुणस्य गुणानन्त्यात् निर्गुणस्य चागोचरत्वात् । कथं तर्ह्यपदार्थे तात्पर्यमिति तत्र विधिमुखवाक्ये भवेदयं नियमः—पदार्थस्यैव वाक्यार्थत्वमिति, निषेधमुखे तु नायं नियम इत्याह—**अतन्निरसनेनेति** । 'अन्यदेव तद्विदितादथो अविदितादधि' 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्' 'अस्थूलमनण्वि'त्यादिप्रकारेण लक्षणया च 'तत्त्वमसी' त्यादयः पर्यवस्यन्ति । नच वाच्यं निषेधैः शून्यमेव ज्ञाप्यत इति । यतो भवन्निधनाः भवति त्वयि निधनं

---

वस्तुस्वरूपबोधकानि वाक्यानि द्विविधानि–विधिमुखानि निषेधमुखानि च । तत्र रात्रौ बहुतरप्रकाशवान् शीतद्युतिमण्डलश्चन्द्र इति चन्द्रस्वरूपबोधने विधिमुखवाक्यम्, गगनगज्योति उष्णकरो न नक्षत्राणि न तडितश्च न इति निषेधमुख, तत्र विधिमुखवाक्ये पूर्वपक्षोक्त नियममङ्गीकरोति—**तत्र विधीति** । निषेधमुखवाक्ये नियमभङ्गमाह—**निषेधेति** । उष्णकरनक्षत्रादिपदैश्चन्द्रो नोच्यतेति निषेधवाक्यस्थपदार्थो न भवति तथापि निषेधवाक्यसमुदायेन लक्षणया बोध्यत इति त्वदुक्तनियमस्य भङ्ग इत्यर्थः । **अन्यदेवेति** । विदितात् ज्ञानविषयादन्यत् भिन्नम् । अथो अपि अविदितादज्ञानविषयादपि अधि अन्यदित्यर्थः । **अन्यत्रेति** । धर्माधर्मास्पृष्ट कृताकृतात् कार्यकारणात् भिन्न यदित्यर्थः । 'अन्यत्र भूताच्च भव्याच्च यत्पश्यसि तद्वदे'ति श्रुतिशेष । नन्वन्यान्यादिपदमेव तद्वाचकमस्तु तत्राह—**अस्थूलमित्यादि** । आदिना 'अह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवागनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यमि'त्यादि 'अथात आदेशो नेति नेती'त्यादीनि गृह्यन्ते, एव नियमभङ्गाद्विधिमुखेष्वपि अखण्डवाक्यलक्षणया पदार्थत्वाभावेऽपि वाच्यबोध्यत्व सम-

समाप्तिर्यासां तास्तथा । नहि निरवधिर्निषेधः संभवति अतोऽवधिभूते त्वयि फलन्तीत्यर्थः ॥ ४१ ॥

द्युपतयो विदुरन्तमनन्त ते नच भवान्न गिरः श्रुतिमौलयः ।
त्वयि फलन्ति यतो नम इत्यतो जयजयेति भजे तव तत्पदम्॥२८॥

इति श्रीमद्भागवतदशमस्थवेदस्तुतेः श्रीधरीटीका समाप्ता ॥

---

वतीत्याशयेनाह—लक्षणया च तत्त्वमसीति । लक्षणयेति निषेधमुखेऽपि द्रष्टव्यम् । एतद्बुद्धीन्द्रियेतिश्लोके उपपादितमित्यलम् ॥ ४१ ॥

अन्तर्यामी सर्वविद्दीननाथः श्रीमत्स्वामी विठ्ठलो देवदेवः ।
तेनैवाहं प्रेरितस्त्वत्रतत्र तं तं भावं व्यक्तमाकार्षमित्थम् ॥ १ ॥

न मीमांसाप्रवीणोऽहं न काणादोक्तिपारगः ।
पौर्वापर्यं वार्तिकेषु श्रुतिभाष्याणि सर्वशः ॥ २ ॥

यत्सम्यगेतान्यालोच्य कुर्वे व्याख्यां सुबोधिनीम् ।
श्रुतिस्तुतेः श्रीधरीयकृतौ तत्क्षम्यतां बुधैः ॥ ३ ॥

इति श्रीमदनन्तोपाध्यायसूनुरिमां कृतिम् ।
कृतार्पयत्कृष्णपदे काशीनाथाभिधो द्विजः ॥ ४ ॥

इति श्रीमदनन्तोपाध्यायसूरिसूनुकाशीनाथोपाध्यायविरचिता वेदस्तुतिश्रीधरीयटीकाया व्याख्या समाप्ता ॥



# लोकेव्यवायेत्येकादशपञ्चमाध्याये एकादशश्लोकस्य

### श्रीधरीय—काशीनाथोपाध्यायव्याख्ये ।

---

**लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्नहि तत्र चोदना।**
**व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा ॥ ११ ॥**

---

श्रीः ॥ ननु व्यवायादीनामपि 'ऋतौ भार्यामुपेयात्' 'हुतशेषं भक्षये'दित्यादिना विहितत्वात्किमेवं निन्द्यते अत आह— **लोक इति** । व्यवायः स्त्रीसङ्गः । नित्या रागत एव नित्यप्राप्ताः । जन्तोः प्राणिमात्रस्य । अतः तत्र तासु चोदना विधिर्नास्ति ।

---

श्रीः ॥ **ननु व्यवायादीनामिति** । ज्योतिष्टोमादौ पशुयागानां होमे हुतशेषं मांसम्, सौत्रामण्यां सुराग्रहैर्मद्यहोमे हुतशेषं मद्यम्, इष्टौ पुरोडाशं च भक्षयेत्, विवाहविधिपरिगृहीतां पत्नीं षोडशदिनेष्वनिषिद्धदिने गच्छेत्, इत्यादिविधिप्राप्ताः स्त्रीसङ्गादयो विरागिणाप्यवश्यानुष्ठेयत्वान्निन्दार्हा नेत्यर्थः । **विधिर्नास्तीति** । अपूर्वविधिर्नास्तीत्यर्थः । तथाहि—'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । उभयोर्नित्यतः प्राप्ते परिसंख्येति गीयते' इति । तत्रापूर्वविधिर्यथा—'व्रीहीन् प्रोक्षति' 'अहरहः संध्यामुपासीते'ति । अत्र हि प्रोक्षणसंध्यावन्दनादीनामेतद्वाक्यं विना लोकतोऽनुमानादिना प्राप्त्यभावादयमपूर्वविधिः । पक्षप्राप्तौ अप्राप्तांशपूरणफलको नियमविधिर्यथा—'व्रीहीनवहन्ति' 'स्वाध्यायोऽध्येतव्यः' इति । अत्र पुरोडाशादिविधिभिः तन्दुलनिष्पत्तावाक्षिप्तायां लोके तन्दुलनिष्पत्तिसाधनत्वेन दृष्टानि घरट्टविदलनावघातादीनि विकल्पेन प्राप्तानीति नावघातप्राप्त्यर्थोऽपूर्वविधिरयं किंतु विदलनादेः साधनान्तरस्य पक्षे प्राप्तावघातस्य पाक्षिकत्वप्राप्तौ पाक्षिकाप्राप्तांशपूरणार्थो नियमविधिः । अवहन्यादेवेति नियमेन सर्वथाऽवघाते प्रापिते

ननु ऋतावुपेयादित्यादिविधिर्दर्शितः । सत्यम् । नत्वयमपूर्वविधिः रागतः प्राप्तत्वात्, किंतु नियमविधिरूपेण रागिणामभ्यनुज्ञामात्रं क्रियते, तदाह—व्यवस्थितिरिति । तेषु व्यवायादिषु । कैः । विवाहयज्ञसुराग्रहैः विवाहविषय एव व्यवायः कार्यः, यज्ञे एवामिष-

---

अप्राप्तांशभावादप्राप्तांशपूरणरूपनियमफलसिद्धिः । एवं क्रतुविधिभिः स्वानुष्ठानार्थं इतिकर्तव्यतादिज्ञाने आक्षिप्ते ज्ञानसाधनत्वेन वेदाध्ययनं पौरुषप्रयोगादिग्रन्थाध्ययनं च पक्षे प्राप्तं तत्र वेदाध्ययनेनैव क्रत्वनुष्ठानज्ञानं संपाद्यमिति नियम्यते । नचात्रोभयोः समुच्चयेन प्राप्तिरस्तु ततश्च पक्षप्राप्तिरिति शङ्क्यम्, एकेन फलसिद्धौ साधनान्तरप्राप्त्यसंभवात् । उभयोर्नित्यप्राप्तौ अन्यनिवृत्तिफलकः परिसंख्याविधिर्यथा—गृहमेधीये इष्टिप्रकरणे 'आज्यभागौ यजती'ति । अत्रहि आज्यभागयोर्नात्यन्तमप्राप्तिः, 'प्रकृतिवद्विकृतिः कर्तव्ये'ति आतिदेशिकन्यायेन प्राप्तेः । अतो नापूर्वविधिः । नापि नियमः । अतिदेशेन नित्यप्राप्त्या पक्षप्राप्त्यभावात्, किंतु आज्यभागयोरिव प्रयाजाद्यङ्गजातस्यापि नित्यप्राप्त्या प्रयाजादिनिवृत्तिफलक आज्यभागावेव कर्तव्यौ इत्येवंरूपः परिसंख्याविधिरिति । ननु नियमपरिसंख्याविध्योः पक्षप्राप्तिनित्यप्राप्तिभ्यां भेदेऽपि फलतो भेदो न दृश्यते अवघातनियमेन नखविदलनादिनिवृत्तेराज्यभागविधिना प्रयाजादिनिवृत्तेश्च दृष्टत्वेनान्यनिवृत्तेः फलस्य समानत्वादिति चेन्नैवम् । नियमविधौ अप्राप्तांशपूरणमेव प्राथमिकं फलम्, अप्राप्तांशपूरणं विनाऽन्यनिवृत्त्यसंभवात् । तदनन्तरं अर्थाज्जायमानाऽन्यनिवृत्तिस्तु न फलं एकफललाभेऽन्यफलाकाङ्क्षाभावात् । परिसंख्याविधौ अप्राप्तांशाभावादप्राप्तांशपूरणरूपफलासंभवादन्यनिवृत्तिरेव फलमिति । तस्मात् स्त्रीसङ्गादीनां रागतः प्राप्तत्वात्तेष्वपूर्वविधिर्नास्तीति सिद्धम् । उक्ताशयमजानानः सर्वविध्यभावोक्तिं मत्वा शङ्कते—ननु ऋतावित्यादि । स्वाशयमाह—सत्यमिति । **किंतु नियमविधिरूपेणेति** । नियमविधिः रूपमाकारो यस्य सः । तेन नियमविधिद्वारकपरिसंख्याविधिर्नेत्यर्थः । **तेषु व्यवायादिष्विति** । सच सच सा च तानि तेष्विति 'नपुंसकमनपुंसकेने'ति नपुंसकस्यैकशेषः । **विवाहविषयेति** । उपलक्षणमेतत् ऋतावेवेत्यस्य । ऋतौ भार्यामुपेयादित्यत्र यदुपेयात्तद्भार्यामेव ऋतावेवेति द्विविधनियमे तात्पर्यात् । उपेयादेवेति तृतीयनियमस्तु न,

सेवा, 'सौत्रामण्यां सुराग्रहान्गृह्णाती'ति श्रुतेस्तत्रैव मद्यसेवेति नियमः क्रियते । ननुच नियमपक्षेऽप्यावश्यकत्वात्र निन्दा युक्ता अत आह —आसु निवृत्तिरिति । आसु व्यवायामिषमद्यसेवासु निवृत्ति-रिष्टा । अयं भावः—नायं नियमविधिरपि नित्यप्राप्तत्वात् अतो निवृत्तिः परिसङ्ख्यैव । कथं तर्हि व्यवस्थितिरित्युक्तम् । उच्यते ।

---

उपगमनस्यैव रागतो नित्यप्राप्तत्वेन व्यावर्त्याभावात्, आसु निवृत्तिरिष्टेति वक्ष्य-माणत्वात् । ननुच नियमपक्षेऽपीति । अपिशब्दात्परिसङ्ख्यापक्षेऽपीति- उक्तोदाहरणेषु व्रीह्यवघातवेदाध्ययनाज्यभागादेरवश्यमनुष्ठेयत्व, अवघाताद्यकरणे क्रतुवैगुण्यापत्त्या प्रायश्चित्तापत्ते । एव स्त्रीसङ्गाद्यकरणे प्रायश्चित्तापत्तेर्हेयत्वबो-धिका निन्दा न युक्तेत्यर्थं । आसु निवृत्तिरिष्टेति प्रतीकग्रन्थाग्रे टीकापाठ प्राचीनसमत. । एवमासु व्यवायामिषमद्यसेवासु निवृत्तिरिष्टा । ( अय भाव — नाय नियमविधिरपि नित्यप्राप्तत्वात्, अतो निवृत्ति परिसङ्ख्यैव । कथं तर्हि व्यवस्थितिरित्युक्तम् । उच्यते ) इत्यादि पाठान्तर लेखकप्रमाद । ननु विधि-विषयेष्ववश्यानुष्ठेयत्वदर्शनात्प्रवृत्तिरेवोचिता तत्कथ सिद्धान्तीष्टापि निवृत्ति सम-वतीत्याशङ्कायामाह—अयं भाव इति । कथं तर्हीति । परिसङ्ख्याविध्यङ्गी-कारे व्यवस्थितिपदोक्तनियमविधित्यागापत्त्या व्यवस्थितिपदेन नियमविध्यङ्गीकार-वैयर्थ्यमित्यर्थं । उपलक्षणमेतत् परिसङ्ख्याविध्यङ्गीकारेऽपि परिसङ्ख्याविधिविष-येष्वाज्यभागाश्वरशनादानादिषु अवश्यानुष्ठेयत्वदर्शनात्सिद्धान्तीष्टाया निवृत्तेर-सभवेन पूर्वपक्षोक्तदोषतादवस्थ्यस्याप्युपलक्षणीयत्वात्, दोषद्वयस्यापि परिहार प्रतिजानीते—उच्यते इति । स्वतन्त्र परिसङ्ख्याविधि क्वापि नाङ्गीक्रियते, किंतु क्वचिदपूर्वविधिद्वारक क्वचिन्नियमविधिद्वारक इति । प्रकृते तु नियमविधि-द्वारक परिसङ्ख्याविधिरिति विधिद्वयोक्तेरप्यविरोधेन स्वीकृतपरित्यागाद्युक्तदोषा सभव । अपूर्वविधिद्वारकपरिसङ्ख्याविधावेव विधेयस्यावश्यानुष्ठेयत्व, नियमविधि-द्वारकपरिसङ्ख्यायां विधेयस्यावश्यानुष्ठेयत्वाभावात् । अथवा पक्षप्रापकस्य नित्यप्रापकस्य च प्रमाणस्य शाश्वतत्वे विधेयस्यावश्यानुष्ठेयत्व तस्यानित्यत्वे तु न विधेयस्यावश्यानुष्ठेयत्वमिति सिद्धान्तीष्टापि निवृत्तिरपि सभवतीति दोषद्वयसमा-धिरुच्यते इत्यर्थं । प्रतिज्ञातमर्थं सहेतुक सोदाहरण सप्रमाण उपपादयितुमुप-

१ वेद०

न तावत्परिसंख्याविधिना श्रुत्या निवृत्तिरित्युच्यते, तथासति स्वार्थत्यागः परार्थकल्पना प्राप्तबाधश्चेति दोषत्रयं स्यात् । अतः कचित्प्राप्स्यतोऽप्यर्थस्य प्रापणमनर्थकमित्यपूर्वविधिद्वाराऽन्यनिवृत्तिः फलतो

---

क्रमते—**न तावदित्यादिना** । परिसंख्याविधिनेति कर्तरि तृतीया । श्रुत्येति करणे । सर्वत्र परिसंख्याविधिना श्रुत्या शब्देनान्यनिवृत्तिर्नोच्यते । अन्यनिवृत्तिः शब्दार्थो न भवति किंतु अर्थादेव प्रसज्यते । तथासति शब्दत एवान्यनिवृत्तिप्रतिपादनाङ्गीकारे सतीत्यर्थः । **स्वार्थत्याग इति** । 'इत्यश्वाभिधानीमादत्ते' इति परिसंख्याविधिवाक्ये अनेन मन्त्रेणाश्वाभिधान्यादानं कर्तव्यमिति स्वार्थः स्वत्राश्वाभिधानीमादत्ते इति वाक्यस्यानेन मन्त्रेण गर्दभरशनादानं न कर्तव्यमिति शब्दाङ्गीकारे अश्वाभिधान्यादानस्य स्वार्थस्य त्यागः, विध्यपेक्षायाः परस्य निषेधस्यार्थः गर्दभरशनादानं न कार्यमित्येवंरूपस्तस्य कल्पना, लिङ्गान्तररशनाद्वयेऽस्य प्राप्तस्य मन्त्रस्य गर्दभरशनाग्रहणे बाधः, इति दोषत्रयं स्यादित्यर्थः । तत्राद्यं दोषद्वयं शब्दविषयं, तृतीयदोषोऽर्थविषयः । फलतोऽन्यनिवृत्तिरिति पक्षेऽपि प्राप्तबाधोऽस्त्येव, तथापि तस्यार्थिकत्वाद्वाक्यविरुद्धाप्त्यभावाद्वा न दोषः । अतो दोषत्रयप्रसङ्गाभावायापूर्वविधिद्वारको वा परिसंख्याविधिरङ्गीकार्य इत्याह—**अतः कचित्प्राप्स्यतोऽपीति** । यथा प्राप्तस्य प्रापणमनर्थकमेवं विधिप्रवृत्तिक्षणे प्राप्तिरहितस्य विधिप्रवृत्त्युत्तरकाले प्राप्स्यतोऽपि प्रापणमनर्थकमिति दृष्टान्तव्यञ्जकमपिपदम् । श्रुतिर्हि विलम्बितप्रवृत्तिकाल्लिङ्गात्पूर्वमेव प्रवर्तते, श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानामुत्तरोत्तरापेक्षया पूर्वपूर्वस्य प्रथमं प्रवृत्तेः । यथा 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इत्यत्रैन्द्रलिङ्गेनेन्द्रोपस्थाने मन्त्रविनियोजनात्पूर्वमेव श्रुत्या गार्हपत्योपस्थाने इन्द्रपदोपेतो मन्त्रो विनियुज्यते एवं 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त' इत्यत्र लिङ्गप्रवृत्तेः पूर्वमेव श्रुतिरश्वाभिधान्यादाने मन्त्रं विनियुङ्क्ते । श्रुतिप्रवृत्तिक्षणे लैङ्गिकविनियोगप्राप्त्यभावादपूर्वविधिरयम् । एतद्विध्यभावेऽपि रशनाग्रहणप्रकाशनसामर्थ्यरूपाल्लिङ्गान्मन्त्रोऽश्वरशनादाने प्राप्स्यति । स्वस्याव्यभिचरितफलस्य क्रतोः संनिधानी रशना पश्चात्तं अनुष्ठानमिति मन्त्रार्थस्वरूपात् । यथा 'बर्हिर्देवसदनं दामी'ति मन्त्रो विधिं विनैव बर्हिश्छेदनप्रकाशनसामर्थ्याल्लिङ्गादेव बर्हिश्छेदने प्राप्नोति तद्वत् । अतः प्राप्स्यतः प्रापणमनर्थकमिति

भवति । तद्यथा—'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यत्र रशनालिङ्गतो गर्दभाश्वाभिधानीरशनाद्वये प्राप्स्यतो मन्त्रस्यापूर्वविधिद्वारा परिसंख्योच्यते । तथोक्तं तन्त्रवार्तिके—'अप्राप्तविधिरेवायमतो मन्त्रस्य निश्चितः । परिसंख्या फलेनोक्ता न विशेषः पुनः श्रुते'रिति । क्वचित्तु रागतो नित्यप्राप्तस्याप्राप्तांशपूरणलक्षणस्य नियम-

---

विधिर्विषयश्चेत् प्राप्ते रशनालिङ्गसामान्यादश्वरशनादान इव गर्दभरशनादानेऽपि मन्त्रः प्राप्स्यति । यथानेऽश्वरशनादानस्येव गर्दभरशनादानस्याप्यनुष्ठीयमानत्वात् । ततो गर्दभरशनादाने मन्त्रनिवृत्तिर्विधेः फलमिति फलतोऽन्यनिवृत्तिप्रयोजनोऽपूर्वविधिद्वारकः परिसंख्याविधिः । आज्यभागौ यजतीत्यप्यपूर्वविधिद्वारा परिसंख्या, उपदेशादतिदेशस्य विलम्बितप्रवृत्त्याऽऽज्यभागौ यजतीति विधिप्रवृत्तिक्षणे अतिदेशादाज्यभागाद्यङ्गसमूहप्राप्त्यभावात् । अत्र वार्तिकं प्रमाणयति—अप्राप्तेति । अतः श्रुतिप्रवृत्तिक्षणे लिङ्गप्राप्त्यभावादन्यनिवृत्तौ शाब्दादिदोषत्रयप्रसक्तेश्चायमश्वाभिधानीविधिरपूर्वविधिरेव मन्त्रस्य निश्चितः । परिसंख्या गर्दभरशनादाने मन्त्रनिवृत्तिस्तु फलेनोक्ता सूचिता । ननु लिङ्गेन रशनासामान्येन विनियोग उक्त इति 'अश्वाभिधानीमादत्त' इति श्रुतेः पुनरश्वरशनारूपो विशेष उक्त इत्यवगम्यते इत्यस्तु, ततश्च श्रुत्या लैङ्गिकविनियोगस्य बाधो न, उपसंहारन्यायेन श्रौतलैङ्गविनियोगयोरेकवाक्यत्वसंभवात् । उपसंहारो नाम सामान्यप्राप्तस्य विशेषे संकोचः । यथा—'पुरोडाशं चतुर्धा करोति'इति पुरोडाशसामान्यप्राप्तं चतुर्धाकरणं 'आग्नेयं चतुर्धा करोती'ति वाक्येनाग्नेये संकोच्यते तेन वाक्यद्वयैकवाक्यता तद्वदत्र संभवात् लिङ्गबाधेन गर्दभरशनानिवृत्तिफलकत्वं विधेर्न संगच्छते तत्राह—**न विशेषः पुनःश्रुतेरिति** । लिङ्गेन सामान्यतोऽवगम्यते विशेषस्तु श्रुत्यैव गम्यते इति न वाच्यमित्यर्थः । श्रौतविनियोगक्षणे लिङ्गेन सामान्यविनियोगस्यैवाभावेनोपसंहारन्यायवैलक्षण्यात् । उपसंहारे हि प्रथमं सामान्यं प्रवर्तते पश्चाद्विशेषः । प्रकृते तु प्रथमं श्रुत्युक्तविशेषप्रवृत्तिः पश्चात्सामान्यलिङ्गबोधकप्रवृत्तिरिति नियमविधिद्वारा परिसंख्यामाह—**क्वचिदिति** । पञ्चनखभक्षणस्य रागतो नित्यप्राप्तत्वादपूर्वविधिर्न, दोषत्रयदुष्टत्वाच्छाब्दीपरिसंख्यापि न, ततः पक्षप्राप्त्यभावेऽपि परिशेषान्नियमविधिः तस्य चाप्राप्तांशपूरणरूपफलाभावादितरनिवृत्तिः फलत्वेन

फलस्याप्यभावान्नियमविधिद्वारा फलतः परिसंख्या भवति, यथा 'पञ्च पञ्चनखा भक्ष्या' इति, तथा रागतो नित्यप्राप्तस्य व्यवायादेर्विवाहादिनियमेनाभ्यनुज्ञाद्वारा परिसंख्यैवेति । ननु यदि अभ्यनुज्ञामात्रमेतद्भवेत्तर्हि 'ऋतुस्नातां तु यो भार्यां संनिधौ नोप-

कल्प्यते । अतएव व्याकरणशास्त्रे सूत्रान्तरैर्नित्यप्राप्तिविषये आरभ्यमाणः सर्वोऽपि परिसंख्याविधिर्नियमविधित्वेन व्यवह्रियते । स्वार्थत्यागादिदोषत्रयपरिहाराय च विधिमुखेन प्रवृत्तिं स्वीकृत्य नियमार्थकैवकारगर्भित एव प्रायो यास्यार्थकार उच्यते ननु नञ्गर्भितः, अन्यथा 'उभयप्राप्तौ कर्मणी'त्यादेः कर्मण्येव षष्ठीति वृत्तिर्नोच्यते किंतु कर्मपदस्य कर्तरि लक्षणाञ्च अध्याहारं च कृत्वा कर्तरि षष्ठी नेत्येव वृत्तिरुच्येत । राजपुरुषादौ च 'कृत्तद्धितसमासाश्चे'ति प्रातिपदिकसंज्ञेति ग्रन्थाश्च न संगच्छेरन् । नियमस्य निषेधमुखेन प्रवृत्तौ समासग्रहणस्य वाक्ये प्रातिपदिकसंज्ञा नेत्यर्थकत्वेन राजपुरुषादौ संज्ञाविधायकत्वाभावात् । तस्मादत्र नञ्भक्षणादौ नियमविधिद्वारकः परिसंख्याविधिर्व्याकरणशास्त्ररीत्या युक्त इति ।

**यथा पञ्च पञ्चेति** । 'पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव । शशक शल्लकी गोधा खड्गः कूर्मश्च पञ्चम'इति पञ्चैव पञ्चनखा भक्ष्याः, अर्थादितरे वानरादयो न भक्ष्या इति । अत्र हि विधिनिषेधस्य पञ्चानां भक्षणाभक्षणे न, भक्षणाकरणे प्रायश्चित्ताभावात्, किंतु पञ्चेतरभक्षणे प्रायश्चित्तं, एवं व्यवायादेरावश्यकत्वाभावाद्भार्यागमनाकरणे प्रायश्चित्तं न, किंतु परदारगमने प्रायश्चित्तमिति । प्रकृते योजयति—तथेति । एवं विधेयस्यावश्यकत्वा[illegible]

गच्छति। घोरायां भ्रूणहत्यायां पच्यते नात्र संशय' इत्यादि दोषश्रवणं न स्यात्, नैष दोषः, मनसि कामे सत्यपि तस्यामरुच्या द्वेषादिना वा तामनुपगच्छतो दोषश्रवणोपपत्तेरिति सर्वमनवद्यम् ॥ ११ ॥

---

वेदाध्ययनादावपि योज्यम्। तथा परिसंख्यास्थलेऽपि रशनालिङ्गस्यातिदेशस्य नित्ये प्रसक्तत्वात् बलादेवानुष्ठानं न तु परिसंख्याविधिबलात्, परिसंख्यायाः अन्यनिवृत्तौ तात्पर्येणावश्यकत्वे तात्पर्याभावात्, एवं व्याकरणशास्त्रेऽपि सामान्यविधीनां नित्यत्वादेव परिसंख्याविषयेष्ववश्यानुष्ठेयत्वमूह्यम्। प्रकृते तु यथा पञ्चनखभक्षणादौ नित्यतः प्रापकस्य रागस्य कादाचित्कत्वेन शश्वत्प्रवृत्त्यभावात् रागसत्त्वे भक्षणं रागाभावे न भक्षणमिति न विधेयस्यावश्यानुष्ठानं, एवं स्त्रीसङ्गादौ नित्यतः प्रवर्तकस्य रागस्य शाश्वतिकत्वाभावात् रागसत्त्वेऽवश्यानुष्ठानं विरागिणां तु नावश्यकत्वम्। एतद्द्योतनायैव नित्यवत्प्राप्तस्येति वतिप्रत्ययः, रागस्य सर्वपुरुषे सर्वकाले च नियतत्वाभावेन नित्यत्वाभावादिति। एतामेव गूढाशङ्कां स्पष्टमाह—**नन्वित्यादिना। भ्रूणहत्या गर्भहत्या। श्रवणं न स्यादिति।** दोषश्रवणान्नियमविधिद्वारकपरिसंख्याविषयेऽप्यवश्यानुष्ठेयत्वमस्तीत्यर्थः। समाधानं स्पष्टयति—**मनसि काम इति।** रागस्यैव मूलप्रवर्तकप्रमाणत्वान्नियमद्वारकपरिसंख्याविधेस्तु इतरनिवृत्तावेव तात्पर्येणावश्यानुष्ठाने तात्पर्याभावात् रागाभावे प्रवर्तकप्रमाणस्याभावादवश्यानुष्ठानाभावे दोषाभावोऽयुक्तएव। एवमग्नीषोमीयादेः पशुद्रव्यकयागस्य सुरायुक्तसौत्रामण्यादेश्च विषयरागिणि पुरुषेऽन्तःकरणशुद्ध्यभावात् विषयरागाभावेऽन्तःकरणशुद्धिसिद्ध्या कर्माधिकाराभावात्, ज्ञाने भक्तौ वाधिकारोत्पत्त्या ज्योतिष्टोमाद्यनुष्ठानस्यावश्यकत्वाभावात्, आमिषमद्यसेवयोरनावश्यकत्वम्। नत्वत्र ज्योतिष्टोमः कार्यो मांसमात्रं न भक्षणीयमिति तात्पर्यं विधिवैगुण्यापातात्। सुरामदस्य परिवर्जकता दृष्टौ सौत्रामणिरेव न कार्य इति केचित्। अन्ये तु सौत्रामणिः कार्यः सुरामदस्थाने प्रतिनिधिः कार्य इत्याहुः॥ मम तु श्लोकतात्पर्यमेवं प्रतिभाति—व्यवायादिषु रागतः प्राप्तत्वादपूर्वविधिर्न, पक्षप्राप्त्यभावान्नियमो न, दोषश्रवणसम्भवादपूर्वनियमयोरसम्भवाच्च परिसंख्यापि न, किन्तु सामान्यप्राप्तस्य विशेषे सङ्कोचरूप उपसंहारः। यथाहि यथा 'पुरोडाशं चतुर्धा करोति' इति पुरोडाशसामान्ये प्राप्तचतुर्धाकरणं 'आग्नेयं चतुर्धा करोति' इति

वाक्येनाग्नेये संकोच्यते, नात्र नियमः परिसंख्या वा मीमांसकैरुच्यते, एवं रागतः पञ्चनखसामान्ये प्राप्तं भक्षणं पञ्चसु पञ्चनखेषु संकोच्यते । परिसंख्योदाहरणं तु 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त' इत्यादिकमपूर्वविधिद्वारकमेकविधमेव । तथा रागतः स्त्रीसामान्ये कालसामान्ये च व्यवायः प्राप्तः ऋतौ भार्यायां च संकोच्यते, एवमामिषसेवादावपि योज्यम् । तथाच विधिफलाप्रात्यभावेन रागत एव प्राप्तत्वेन निवृत्तिरेव विरागिणामिष्टेति । इत्यभेतत्पक्षे श्लोकयोजना—व्यवायादयो नित्या रागतः प्राप्ता इति तेषु चोदना कोऽपि विधिर्नास्ति, तर्हि ऋतौ भार्यामुपेयादित्यादेः कोऽर्थस्तत्राह—व्यवस्थितिरिति । अव्यवस्थया सर्वत्र रागतः प्राप्तं व्यवायादिकं तस्य विवाहयज्ञसुराग्रहैर्व्यवस्था क्रियते । उपसंहारापरनामा संकोचः क्रियते इत्यर्थः । तस्माद्विधेरभावान्मूलभूतप्रापकरागस्य दुर्बलत्वाद्विचारेणापनोद्यत्वाच्च विरागिणां निवृत्तिरेवेष्टा न प्रवृत्तिरिति ॥

इति श्रीमदनन्तोपाध्यायसूरिसूनुराधानाथोपाध्यायविरचितो
लोकेव्यवायेतिश्लोकटीकाप्रकाशः समाप्तः ॥



# जन्माद्यस्येतिभागवतारम्भश्लोकः

श्रीधरीय-काशीनाथोपाध्यायव्याख्ये ।



ॐ नमः परमहंसास्वादितचरणकमलचिन्मकरन्दाय
भक्तजनमानसनिवासाय श्रीरामचन्द्राय ।
वागीशायस्य वदने लक्ष्मीर्यस्य च वक्षसि ।
यस्यास्ते हृदये संवित्तं नृसिंहमहं भजे ॥ १ ॥



धीः ॥ श्रीरुक्मिणीशमेवं श्रीमद्विठ्ठलविभुं गुरुं स्वप्रभुः ।
धीवाग्विलासहेतुं चित्तकामदुपाङ्घ्रिपाद्यं वन्दे ॥ १ ॥
श्रीभागवतनिष्पर्यटीकाहरिरकारि यैः ।
श्रीधरस्वामिपादांस्तान्वन्दे मत्सरोद्धर्षनान् ॥ २ ॥

वाक्येनाग्नेये संकोच्यते, नात्र नियमः परिसंख्या वा मीमांसकैरुच्यते, एवं रागतः पञ्चनखसामान्ये प्राप्ते भक्षणं पञ्चसु पञ्चनखेषु संकोच्यते । परिसंख्योदाहरणं तु 'इत्यश्वाभिधानीमादत्त' इत्यादिकमपूर्वविधिद्वारकमेकविधमेव । तथा रागतः स्त्रीसामान्ये कालसामान्ये च व्यवायः प्राप्तः ऋतौ भार्यायां च संकोच्यते, एवमामिषसेवादावपि योज्यम् । तथाच विधिफलात्प्राप्त्यभावेन रागत एव प्राप्तत्वेन निवृत्तिरेव विरागिणामिष्टेति । इत्थमेतत्पक्षे श्लोकयोजना—व्यवायादयो नित्या रागतः प्राप्ता इति तेषु चोदना कोऽपि विधिर्नास्ति, तर्हि ऋतौ भार्यामुपेयादित्यादेः कोऽर्थस्तत्राह—व्यवस्थितिरिति । अव्यवस्थया सर्वत्र रागतः प्राप्तं व्यवायादिकं तस्य विवाहयज्ञसुराग्रहैर्व्यवस्था क्रियते । उपसंहारापरनाम्ना संकोचः क्रियते इत्यर्थः । तस्माद्विधेरभावान्मूलभूतप्रापकरागस्य दुर्बलत्वाद्विचारेणापनोद्यत्वाच्च विरागिणां निवृत्तिरेवेष्टा न प्रवृत्तिरिति ॥

इति श्रीमदनन्तोपाध्यायसूरिसूनुकाशीनाथोपाध्यायविरचितो
लोकेव्यवायेतिश्लोकटीकाप्रकाशः समाप्तः ॥



# जन्माद्यस्येतिभागवतारम्भश्लोकः

## श्रीधरीय–काशीनाथोपाध्यायव्याख्ये ।



ॐनमः परमहंसास्वादितचरणकमलचिन्मकरन्दाय
भक्तजनमानसनिवासाय श्रीरामचन्द्राय ।
वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि ।
यस्यास्ते हृदये संवित्तं नृसिंहमहं भजे ॥ १ ॥

---

श्री ॥ श्रीरुक्मिणीसमेत श्रीमद्विट्ठलविभु गुरु स्वभुव ।
श्रीवाग्विलासहेतु श्रितकामदुघाङ्घ्रिसारस वन्दे ॥ १ ॥
श्रीभागवतनिग्धर्थटीकाहष्टिरकारि ये ।
श्रीधरस्वामिपादास्तान्वन्दे भक्त्यैकदर्शनान् ॥ २ ॥

श्रीमद्दशमस्कन्धतोपणीसारसप्रहारम्भे पुराणानां वेदचतुष्टयव्याख्यानुभूतपञ्चमवेदरूपाय प्रमाणतो विस्तरेणोपपादित यत एव शातुमलमिति नेह वितन्यते । तत्र तावत्साकारमङ्गलमनेनैवामीप्सितचतुर्वर्गसिद्धिरिति श्रीमद्भागवतसिद्धान्तं सूचयन् निजेष्टदेवतानुस्मरणरूप मङ्गलमाचरति—वागीशेति । सरस्वती यस्य मुखे इत्यर्थः । अथवा ईशा विधिनिषेधैर्नीवाश्रियमयन्ती वेदलक्षणा वाक् यस्य मुखे इत्यर्थः । अनेन तद्वदनानुसरणाद्परविद्यावाप्तिर्ध्वनिता । यदुक्तं समधिष्ठात्री श्री हेमरेखाल्पेणास्ते इति सच्चिन्मूर्तौ भगवति चिच्छभागाभावेन देहदेहिभागसंभवेऽपि यद्वदनादिसारणात् इष्टसाधनसपक्षमसिद्धि । अनेन त्रिवर्गलाभ । विद्यालक्ष्मीभ्यां हि त्रिवर्गसिद्धि । यस्य हृदये संवित् परविद्या आस्ते इति तद्ध्यानाद्ब्रह्मैक्यज्ञानरूपपरविद्याप्राप्तिरिति मुक्तिसिद्धि । अत्र हृदयवक्षसोरभेदात्पूर्वं वक्षसे । त नरसिंहमूर्तिं भगवन्तं कीर्तनस्मरणादिभि सेवे चतुर्वर्गलाभायेत्यर्थः । सा वै साधनसंपत्ति पुरुषार्थचतुष्टये । तया विना तदाप्नोति नरो नारायणाश्रय । धर्मार्थकाममोक्षाख्य य इच्छेच्छ्रेय आत्मन । एक एव हरे

वाक्येनाग्नेये संकोच्यते, नात्र नियमः परिसङ्ख्या वा मीमांसकैरुच्यते, एवं रागतः पञ्चनखसामान्ये प्राप्तं भक्षणं पञ्चसु पञ्चनखेषु संकोच्यते । परिसंख्योदाहरणं तु 'इत्यश्वाभिधानीमादत्त' इत्यादिकमपूर्वविधिद्वारकमेकविधमेव । तथा रागतः स्त्रीसामान्ये कालसामान्ये च व्यवायः प्राप्तः ऋतौ भार्यायां च संकोच्यते, एवमामिषसेवादावपि योज्यम् । तथाच विधिबलात्प्राप्त्यभावेन रागत एव प्राप्तत्वेन निवृत्तिरेव विरागिणामिष्टेति । इत्थमेतत्पक्षे श्लोकयोजना—व्यवायादयो नित्या रागतः प्राप्ता इति तेषु चोदना कोऽपि विधिर्नास्ति, तर्हि ऋतौ भार्यामुपेयादित्यादेः कोऽर्थस्तत्राह—व्यवस्थितिरिति । अव्यवस्थया सर्वत्र रागतः प्राप्तं व्यवायादिकं तस्य विवाहयज्ञसुराग्रहैर्व्यवस्था क्रियते । उपसंहारापरनामा संकोचः क्रियते इत्यर्थः । तस्माद्विधेरभावान्मूलभूतप्रापकरागस्य दुर्बलत्वाद्विचारेणापनोद्यत्वाच्च विरागिणां निवृत्तिरेवेष्टा न प्रवृत्तिरिति ॥

इति श्रीमदनन्तोपाध्यायसूरिसूनुकाशीनाथोपाध्यायविरचितो
लोकेव्यवायेतिश्लोकटीकाप्रकाशः समाप्तः ॥



विश्वसर्गविसर्गादिनवलक्षणलक्षितम् ।
श्रीकृष्णाख्यं परं धाम जगद्धाम नमामि तत् ॥ २ ॥
माधवोमाधवावीशौ सर्वसिद्धिविधायिनौ ।
वन्दे परस्परात्मानौ परस्परनुतिप्रियौ ॥ ३ ॥
संप्रदायानुरोधेन पौर्वापर्यानुसारतः ।
श्रीभागवतभावार्थदीपिकेयं प्रतन्यते ॥ ४ ॥

---

स्त्वत्र कारणं पादसेवनम् ॥' इत्युक्तेः ॥ १ ॥ इदानीं ग्रन्थप्रतिपाद्यदेवतां प्रणमति—**विश्वेति** । 'अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः । मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रय' इति दशलक्षणानि लक्ष्यन्ते । तानि च यो विश्वसर्गविसर्गादिकर्ता स परमात्मा श्रीकृष्ण इत्येवंप्रकारेण दशमस्य आश्रयस्य सर्वाधारस्य परमेश्वरस्य लक्षणानि संपद्यन्ते, तथाच मुक्तिपर्यन्तैर्नवभिर्लक्षणैर्बोधितं श्रीकृष्णं ब्रह्म नमामीत्यर्थः । कृष्णाख्यमित्याख्यापदेन नामरूपवत्त्वोक्तावपि मायातत्कार्यस्पर्शरहितमित्याह—**परंधामेति** । मुक्तप्राप्यमित्यर्थः । इत्यमेव 'वेत्ता च वेद्यं च परं च धाम' इत्यत्र भाष्यकारैर्व्याख्यातं—जगतो धाम आश्रय इति दशमलक्ष्यरूपतोपपादनं, यद्वा जगद्धाम यस्येति विश्वानुस्यूतत्वेनान्तर्यामिरूपता । नमामेति प्रार्थनायां प्राप्तकाले लोट् । बहुवचनं तु 'अस्मदो द्वयोश्चे'त्येकत्वेऽपि साधु ॥ २ ॥ हरिहरयोरभेददर्शनाभिर्बाधेष्टसिद्धिरिति बोधयन्नेतौ प्रणमति—**माधवेति** । ईशाविति ईश्वरद्वयासंभवादभेद एव तयोः पर्यवस्यतीत्यर्थः । नामरूपादिभेदस्तु तत्तद्भक्तप्रीतिवशाज्जात इति भावः । तदुक्तं तातचरणैः—'हरहर्योः प्रकृत्यैक्यं साधनैक्यं तथापि तौ । प्रत्यये भजतां रुच्या संप्राप्तौ भिन्नरूपता'मिति । व्याख्या—अत्र हरिहरशब्दयोस्तदर्थभूतविष्णुशिवयोश्च प्रकृतिश्चिद्रूपतास्वभावो हृञ्हरण इति धातुश्च । साधनं भजनादिकं कर्त्राद्यर्थप्रत्ययगुणोत्पादनं च । प्रत्ययः प्रतीतिः प्रत्ययसञ्ज्ञकाविकाराकारौ च । रुचिः इच्छा मेघश्यामकर्पूरगौरकान्तिश्च । रूपं चतुर्भुजपद्ममुसलादि अकारान्तेकारान्तशब्दरूपं च योज्यम् । भजतां नाम सेविनां इच्छया विकारादिप्रत्यये कृते सतीत्यन्वयः । अथ भक्तानां प्रत्यये प्रतीतौ कान्त्याभिन्नं रूपमिति च ॥ ३ ॥ विशेषद्वयविशिष्टग्रन्थरचनां प्रतिजानीते—**संमिति** । संप्रदायो मह्यादिपरम्परागताद्वैतादिरूपः तदनुवर्तनेऽपि पौर्वापर्यानुसरणमावश्यकं, अन्यथा

काहं मन्दमतिः क्वेदं मन्थनं क्षीरवारिधेः ।
किं तत्र परमाणुर्वै यत्र मज्जति मन्दरः ॥ ५ ॥
मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम् ।
यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥ ६ ॥

---

'कृष्णस्तु भगवान्स्वय'मित्यादिपूर्वापरवाक्यानालोचनेन 'अथाहमंशभागेने'त्याद्यंशावतारत्वादिव्याख्यानं स्यात्, नहि तथा व्याख्यानेऽप्यद्वैतसंप्रदायो हीयते । भेदवादिभिरपि पौर्वापर्यमनुसृतमित इति संप्रदाय इत्युक्तम् । अथवा संप्रदायः श्रीमद्भागवतव्याख्यानपद्धतिः सा यथा भगवता ब्रह्मणा नारदं प्रति 'त्वमेतद्विपुलीकुर्वि'त्युपक्रम्योपदिष्टा 'यथा हरौ भगवति नृणां भक्तिर्भविष्यति । सर्वात्मन्यखिलाधारे इति संकल्प्य वर्णये'ति हरिलीलाप्राधान्येन श्रीभागवतवर्णनं तु भक्तिरसविघाते न केवलं तत्क्षमिति । एवंच यथा 'मामेव ये प्रपद्यन्ते मायामेतां' इत्यादौ प्रपद्यन्त इत्यादिपदानां भगवदेकशरणार्थं विहाय प्रकारान्तरयज्ञानार्थतादिव्याख्यानं भगवत्पादैः कृतं तथात्र भक्तिप्राधान्यविधायकवाक्यानां भक्तिरसविघातकं ज्ञानादिप्राधान्यतया व्याख्यानं न कर्तव्यमिति श्रीब्रह्मणा व्याख्यानपद्धतिर्विहिता । अतएव 'नन्दगोपकुमाराये'त्यादौ नन्दयतीति नन्दः । गां वेदं पालयतीति गोपः । कुं अविद्यां मारयतीति कुमारः । नन्दश्चासौ गोपश्चासौ कुमारश्चेत्येवं श्रीभागवतं व्याचिकीर्षुः कश्चिद्विपश्चिद्भगवतैव निवारित इति महाजनप्रसिद्धिः । तथाच ब्रह्मोपदिष्टभक्तिप्राधान्यसंप्रदायानुरोधेनेत्यर्थः । तदनुरोधेऽपि पौर्वापर्यानालोचने पूर्वोक्तं श्रीकृष्णे अंशतया व्याख्यानं मायाप्रतिबिम्बत्वमायिकनिष्ठत्वध्यायाभिप्रेतभेदादिव्याख्यानं चापि स्यात्, स्वरसतः पौर्वापर्यालोचनेन तु नैतदिति पौर्वापर्यानुसारत इत्युक्तम् । भावार्थदीपिकेति ग्रन्थनाम ॥४॥ स्वगर्वं परिहरति—क्वेति । अत्र यद्यपीति शेषः । अधुना पयोनिधिमथनवत् शरत्मवेरियं प्रतिज्ञातार्थसिद्धिरसंभाविता यद्यपीत्यर्थः ॥ ५ ॥ तत्सिद्धिं संभावयति—मूकमिति । अत्र तथापीत्यादिः । वाचा नूनं अलं पर्याप्तं भूषितं वा करोतीत्यर्थः । तद्गमके इत्यत्र आत्मनेपदशासनात् क्रियाफलस्य कर्तृगामित्वयोजनायासो न कार्यः । 'तत्रान गोत्रानपरम्पराभवे'त्यादौ कर्मादिदर्शनादिनिर्देशस्तन्मर्यादाया अनादरणात् । अत्र माधवशब्दः गुरुनामेति संप्रदायविदः । तेन गुरुवन्दनमपि

**जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्**
**तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ।**

---

श्रीमद्भागवताभिधः सुरतरुस्ताराङ्कुरः सज्जनिः
स्कन्धैर्द्वादशभिस्ततः प्रविलसद्भक्त्यालवालोदयः ।
द्वात्रिंशत्त्रिशतं च यस्य विलसच्छाखाः सहस्राण्यलं
पर्णान्यष्टदशेष्टदोऽतिसुलभो वर्वर्ति सर्वोपरि ॥ ७ ॥

अथ नानापुराणशास्त्रप्रबन्धैश्चित्तप्रसत्तिमलभमानस्तत्रतत्रापरितुष्यन्नारदोपदेशतः श्रीमद्भगवद्गुणवर्णनप्रधानं भागवतशास्त्रं प्रारिप्सुर्वेदव्यासस्तत्प्रत्यूहनिवृत्त्यादिसिद्धये तत्प्रतिपाद्यपरदेवताऽनुस्मरणलक्षणं मङ्गलमाचरति—जन्माद्यस्येति । परं परमेश्वरम् । धीमहि ।

---

फलितम् ॥ ६ ॥ भक्तिभक्तभगवन्माहात्म्यप्रतिपादकं श्रीमद्भागवतशास्त्रमेव श्रवणपठनपूजनवन्दनादिना सेवितं कामिमोक्षादिसकलपुरुषार्थप्रदं किमुत भक्ता भक्तिर्भगवांश्चेति व्यञ्जयितुं तथात्वेन श्रीमद्भागवतशास्त्रं वर्णयति—श्रीमदिति । श्रीमद्भागवतमिति पञ्चाक्षरं नाम यस्य । 'श्रीमद्भागवते महामुनिकृते' इत्यादिषु मूले तथा व्यवहारात् । भागवतमिति व्यवहारस्तु भामा सत्येतिवत्पूर्वपदलोपात् । तारः प्रणवः अङ्कुरो यस्य ॐजन्माद्यस्येति प्रणवोच्चारपूर्वको तस्यारम्भः । केचित् ॐनैमिषेऽनिमिषक्षेत्रे इत्यत्र प्रणवं पठन्ति । द्वात्रिंशच्च त्रयश्च शतानि चेति त्रिपदद्वन्द्वः । कपिञ्जलानालभेतेत्यत्रेवानिर्धारितविशेषं बहुत्वं त्रित्वे पर्यवस्यति । तेन पञ्चत्रिंशदधिकशतत्रयसंख्याः शाखा इत्यर्थः । समाहारोत्तरद्वन्द्वे तु त्रिशतीति स्यादिति वत्साहरणलीलारम्भे प्रपञ्चितम् । एतेनाघासुरवधाध्यायाभावाभिप्रायं द्वात्रिंशत्पदमिति कस्यचिदुत्प्रेक्षितं प्रत्युक्तम् । हरिलीलाग्रन्थे बोपदेवेन—'निरोधो दशमस्कन्धे नवत्यध्याय ईरितः' इत्युपक्रम्य 'वधश्च वत्सबकयोस्तथाघासुरमोक्षिणः । वत्सचोरब्रह्ममोहो ब्रह्मणा स्तवनं हरे'रित्युक्तत्वेन तद्विरोधापत्तेः । अष्ट दश च सहस्राणीति पृथक्पदेनान्वयः । समासे अष्टादशेति स्यात् ॥ ७ ॥

जन्माद्यस्य यत इति । परं परमेश्वरमिति । बिम्बभूतमीश्वरमित्यर्थः ।

तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १ ॥

ध्यायतेर्लिङि छान्दसम् । ध्यायेमेत्यर्थः । बहुवचनं शिष्याभिप्रायम् । तमेव स्वरूपतटस्थलक्षणाभ्यामुपलक्षयति—तत्र स्वरूपलक्षणं सत्यमिति । सत्यत्वे हेतुः—यत्र यस्मिन्ब्रह्मणि त्रयाणां मायागुणानां

---

देन मायाप्रतिबिम्बितेश्वरव्यावृत्तिः ॥ द्वेधात्र प्रक्रिया । तत्राद्या यथा—अविद्याप्रतिबिम्बो जीवः, मायाप्रतिबिम्ब ईश्वरः । स च उपाधिभूतमायायास्त्रिगुणत्वात्तत्तद्गुणविशिष्टमायाप्रतिबिम्बभेदेन ब्रह्मविष्णुशिवरूपः । बिम्बभूतस्तु परमेश्वरो निरुपाधिकं ब्रह्मैव, स चादिनारायणः श्रीकृष्ण इत्यादिपदेन व्यवह्रियते, शिवपुराणादौ च परशिवादिपदैः । स च स्वोपाधिमायाप्रतिबिम्बितेश्वरधर्मैः सृष्ट्यादिकर्तृत्वादिभिरभिलप्यते । द्वितीया यथा अविद्या माया च एकैव तत्प्रतिबिम्बो जीवः । बिम्बभूतं चैतन्यं ईश्वरो निरुपाधिक एव स एक एव सृष्टिस्थितिप्रलयकर्तृत्वाद्यारोपितधर्मैर्ब्रह्मविष्ण्वादिभेदव्यवहारभाक् बिम्बत्वप्रतिबिम्बत्वाभ्यामनाक्रान्तं शुद्धचैतन्यं निर्धर्मकं ब्रह्मेति ॥ अत्र शास्त्रे द्विविधा प्रक्रियोपलभ्यते—सर्वथा एतच्छास्त्रपरमतात्पर्यगोचरो बिम्बभूतः परमेश्वरो निर्गुणं ब्रह्मैव तत्राभिलप्यमानगुणानां बिम्बपरत्वेन प्रकृतिपरिणामभूतगुणाश्रयत्वाभावात् । स्पष्टं चेदं 'मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् । सुहृदं प्रियमात्मानं साम्यासङ्गादयो गुणा' इत्यादौ । लिङि विधिलिङि च्छान्दसमिति । ध्यै चिन्तायामित्यस्मात् 'व्यत्ययो बहुल'मिति सूत्रेण परस्मैपदव्यत्ययादात्मनेपदम् । 'छन्दस्युभयथे'त्युभयसंज्ञायां सार्वधातुकत्वात्सीयुटः सकारलोपः आर्धधातुकत्वात्त्वभावः बाहुलकात् ध्यायतेः संप्रसारणं 'हल' इति दीर्घः इति वैदिकप्रक्रियाश्रयसूत्रैः साधनीयमित्यर्थः ।—स्वरूपतटस्थलक्षणाभ्यामिति । यत्स्वरूपान्तर्गतं सदितरव्यावृत्ततया लक्ष्यं बोधयति तत्स्वरूपलक्षणं—यथा गोः सास्नादि । यावल्लक्ष्यकालमनवस्थितत्वेन स्वरूपान्तर्गतं सत् यल्लक्ष्यं इतरव्यावृत्तं बोधयति तत्तटस्थलक्षणं—यथा गोविशेषस्य अलंकारविशेषादि, देवदत्तगृहस्य काकादि वा । प्रकृते सत्यं ज्ञानमानन्दश्च परमेश्वरस्वरूपमेव सत् ब्रह्म लक्ष्यमितरव्यावृत्ततया बोधयतीति स्वरूपलक्षणं संपद्यते । जगज्जन्मादिकारणत्वं तु तटस्थलक्षणम्, नहि तत्सर्वदास्ति प्रलयादिदशे तदभावात् । अतः

तमोरजःसत्वानां सर्गो भूतेन्द्रियदेवतारूपः अमृषा सत्यः ।
यत्सत्यतया मिथ्यासर्गोऽपि सत्यवत्प्रतीयते तं परं सत्यमित्यर्थः ।
अत्र दृष्टान्तः—तेजोवारिमृदां यथा विनिमय इति । विनिमयो
व्यत्ययः अन्यस्मिन्नन्यावभासः । स यथाऽधिष्ठानसत्तया सद्वत्प्र-
तीयत इत्यर्थः । तत्र तेजसि वारिबुद्धिः मरीचितोये प्रसिद्धा, मृदि
काचादौ वारिबुद्धिर्वारिणि च काचादिबुद्धिरित्यादि यथायथमूह्यम् ।
यद्वा तस्यैव परमार्थसत्यत्वप्रतिपादनाय तदितरस्य मिथ्यात्वमुक्तम् ।

---

स्वरूपानन्तर्गतं सदाकाशादिव्यावृत्तमीश्वरं लक्षयतीति तटस्थलक्षणम्, तदाह—
तत्र स्वरूपेत्यादि । सत्यपदं ज्ञानानन्दयोरुपलक्षणं—भूतेन्द्रियेति । तमःसर्गः
आकाशादिभूतपञ्चकं, रजःसर्गः कर्मेन्द्रियपञ्चकं प्राणपञ्चकं च, सत्वसर्गः ज्ञाने-
न्द्रियपञ्चकं अन्तःकरणचतुष्टयं तत्तदिन्द्रियाद्यधिष्ठातृदेवताश्चेति विभागः । ऊह्य-
मिति । वारिणि समुद्रजले दूरत्वदोषेण नीलशिलाबुद्धिः, मयाया सभाया जले
स्थलभ्रमो दुर्योधनस्य, अन्धकारस्थरक्तरूपमृदि खदिराङ्गारभ्रम इत्यादि । अनपक्षे
अकारप्रश्लेषेण अमृषापदं सत्यवाचकं कृत्वा सत्यवदिति सत्यसदृशो लाक्षणिकं
कार्यं इति गौरवमित्यस्वरसादाह—यद्वेति । यत्रेत्यनेनेति । यत्र शुक्त्यादौ
रजतादिभ्रमाधिष्ठानस्य तत्र सर्वेश्वावरणं दृष्टं इत्यत्राप्याकाशादिभ्रमाधिष्ठानत्वो-
क्त्या उपाधिना शेषहेत्वज्ञानेन सबन्धः परमेश्वरस्य प्रतीयते, तथाच अज्ञानस-
म्बन्धे तस्य न स्यात्परमेश्वरत्वम् । अज्ञानसंबन्धो हि सर्गाद्यकाले तदाश्रयत्वरूपो
वाच्यः तदानीं अज्ञानाश्रयाणां जीवानामभावादतस्तत्संबन्धं वारयतीत्यर्थः ।
महसा स्वरूपज्ञानेन कपटमज्ञानसंबन्धादि । अयंभावः—अनावृतसंविद्रूपे
बिम्बभूते ईश्वरे अज्ञानाश्रयत्वासंभवात् अज्ञानविषयमात्रेण भ्रमाधिष्ठानता ।
नच तावता ऐश्वर्यहानिः, अज्ञानविषये मण्यादौ कपर्दिकाद्यारोपेऽपि स्वरूपप्रका-
शादेर्बाधादर्शनात् । सृष्टिप्राक्कालेऽप्यनादिजीवानामज्ञानाश्रयाणां सूक्ष्मरूपेण
सत्त्वाच्च काप्यनुपपत्तिरिति । जन्माद्यस्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । जन्म-
स्थितीभङ्गसमाहारः समासार्थः । समाहारे नपुंसकत्वैकत्वयो सत्त्वाज्जन्मादीनि
नपुंसकैकवचनम् । यत इति पञ्चम्यर्थस्तसिल् निमित्तोपादानोभयपरः । यस्मात्

यत्र मृषैवायं त्रिसर्गो न वस्तुतः सन्निति । यत्रेत्यनेन प्रतीतमुपाधिसंबन्धं वारयति । स्वेनैव धाम्ना महसा निरस्तं कुहकं कपटं मायालक्षणं यस्मिंस्तम् । तटस्थलक्षणमाह—जन्मादीति । अस्य विश्वस्य जन्मस्थितिभङ्गा यतो भवन्ति तं धीमहीति । तत्र हेतुः—अन्वयादितरतश्च । अर्थेष्वाकाशादिकार्येषु परमेश्वरस्य सद्रूपेणान्वयादकार्येभ्यश्च खपुष्पादिभ्यस्तद्व्यतिरेकात् । यद्वा अन्वयशब्दे-

---

परमेश्वरात्कर्तुरुपादानाच्च भवतीत्यर्थः । यत इत्यव्ययनिर्देशेन कारणस्याविकृतत्वं ध्वन्यते । तत्र परमेश्वरस्योभयविधकारणत्वे हेतुः—अन्वयादिति । यत्सत्त्वे यत्सत्त्वमन्वयः । यदभावे यदभावो व्यतिरेकः । यथा मृदः कुलालस्य वा सत्त्वे घटोत्पत्तिसत्त्वम् । तदभावे तदभावाधिकरणे तन्त्वादौ घटोत्पत्त्यभाव इत्यन्वयव्यतिरेकौ प्रत्यक्षौ मृदादेः कारणत्वे घटादेः कार्यत्वे च मानं, तथा यत्र यत्र सद्रूपेण परमेश्वरस्य सत्त्वं घटः सन्निति प्रत्यक्षतो दृश्यते तत्र कार्यत्वं, यत्र खपुष्पादौ तदभावः खपुष्पं सत् खपुष्पमस्तीत्यनुभवाभावात्तत्र कार्यत्वस्याभाव इति अन्वयव्यतिरेकौ ईश्वरस्य कारणत्वं जगतः कार्यत्वं च बोधयत इत्यर्थः । अत्रार्थपदेन कार्यार्थकेनान्वयग्रहाधिकरणमुपात्तं, व्यतिरेकग्रहाधिकरणं खपुष्पादिकं तु व्यतिरेकार्थकादितरपदादाक्षेपलभ्यमिति बोध्यम् । ननु मृदादिव्यतिरेकग्रहाधिकरणं तन्त्वादिभावरूपं प्रसिद्धं खपुष्पादिकं त्वलीकमनुपाख्यं तस्य कथं व्यतिरेकग्रहाधिकरणत्वमित्यपरितोषादाह—यद्वेति । अन्वयादिपदस्य यत्सत्त्वे इत्यादिरर्थः पारिभाषिकः, तं विहाय अवयवार्थयोगी यौगिकोऽर्थः परिगृह्यत इत्यर्थः । अनुवृत्तिस्तादात्म्येन प्रतीतिः । व्यावृत्तिर्भेदः । अर्थेषु कार्यकारणेषु कारणस्यानुवर्तमानत्वं कार्यस्य व्यावृत्तत्वं च दृश्यते, तेन यदनुवर्तमानं तत्कारणं यद्व्यावृत्तं तत्कार्यमिति निश्चेतव्यम् । सुवर्णादिकारणं हि कारणावस्थायां, कटककुण्डलादिकार्यं तु परस्परं कार्यावस्थायां कारणावस्थायां च नानुवर्तते, इदं कुण्डलं सुवर्णं सुवर्णकटकं सुवर्णमिति तादात्म्येन प्रतीयमानत्वात् । कटककुण्डलादिकार्यं तु परस्परं कारणावस्थायां च नानुवर्तते, कुण्डले सुवर्णपिण्डे च कटकादितादात्म्यप्रतीत्यभावात् । अतः कुण्डलं कटकं न, सुवर्णपिण्डः कटकं नेत्येवं

नानुवृत्तिरितरशब्देन व्यावृत्तिः । अनुवृत्तत्वात् सद्रूपं ब्रह्म कारणं मृत्सुवर्णादिवत्, व्यावृत्तत्वाद्विश्वं कार्यं घटकुण्डलादिवदित्यर्थः । यद्वा सावयवत्वादन्वयव्यतिरेकाभ्यां यदस्य जन्मादि तत् यतो भवतीति संबन्धः । तथाच श्रुतिः—'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ती' त्याद्या । स्मृतिश्च 'यतः सर्वाणि भूतानि भवन्त्यादियुगागमे । यस्मिंश्च प्रलयं

---

भेदेन प्रतीयमानत्वाद्व्यावृत्तत्वं कार्यस्य । एवं घटः सन् पटः सन्निति विश्वकार्ये सद्रूपं ब्रह्मानुवर्तते, घटादिकार्यं तु पटादौ कार्ये सृष्टिसमये कारणावस्थायां च नानुवर्तते, सृष्टिप्राक्कालिकं ब्रह्म घटो न, घटः पटो नेत्यादिभेदप्रतीतेः, अतो व्यावृत्तत्वात् विश्वं कार्यं, सद्रूपं ब्रह्म कारणमिति भावः । ननु सिद्धान्ते निमित्तोपादानत्वोभयविधकारणत्वं परमेश्वरस्येष्टं, अनुवृत्तिश्चोपादानस्यैव मृदादेर्घटादौ दृश्यते न तु निमित्तस्य कर्तुः कुलालादेः अतोऽनुवृत्तिव्यावृत्तिहेतुना कार्यकारणभावसाधने परमेश्वरस्योपादानत्वमेव सिध्येत्, न कर्तृत्वमपि । किंच पूर्वमीमांसकैः सृष्टिप्रलयानभ्युपगमाज्जगतो जन्मादेरप्रसिद्धौ जन्मादिकारणत्वं कथं तटस्थलक्षणं स्यादित्याशङ्कामाह—यद्वा सावयवत्वादन्वयेति । अत्रान्वयेतरपदाभ्यां अन्वयव्याप्तिः व्यतिरेकव्याप्तिश्च गृह्यते, तेनार्थोऽयमिति बहुपदमध्यस्थितपक्षपरिच्छेदसहचरितसावयवत्वादिहेतोरध्याहारः सूच्यते । तथाच अर्थेषु घटपटादिकार्येषु आत्मनि च गृहीतान्वयव्यतिरेकव्याप्तिकस्य सावयवत्वादिहेतोरस्येति पदवाच्यजगति पक्षे परामर्शादिकारणसामग्रीबलाद्यज्जन्मादि सिध्यति तत् यतो भवति तं धीमहीत्यन्वयः । तत्र हेतुपुरःसरा व्याप्तिरन्वयव्याप्तिः । साध्याभावपुरःसरा व्याप्तिर्व्यतिरेकव्याप्तिः । तथाच प्रयोगः—इदं विश्वं जन्मादिमत्, सावयवत्वात्, यत्रयत्र सावयवत्वं घटपटादौ तत्र जन्मादिमत्त्वं, यत्र जन्मादिमत्त्वाभावः आत्मनि तत्र सावयवत्वाभावः, तथा पृथिव्यादिजगतोऽपि सावयवत्वाज्जन्मादिमत्त्वसिद्धिः । एवं परिच्छिन्नत्वकृतकत्वादिहेतुरस्य व्याप्त्यादिकं बोध्यम् । एवंच अन्वयव्यतिरेकव्याप्तिमदनुमानेन जगति जन्मादिकं प्रसाध्य तत्कारणत्वं उभयविधं परमेश्वरस्य श्रुत्यैव साधनीयमित्यभिप्रायः । तदाह—तथाच श्रुतिरिति । अन्वयव्याप्तिकमेव अनुमानं न व्यतिरेकव्याप्तिकमिति वेदान्तिनो

यान्ति पुनरेव युगक्षये' इत्याद्या । तर्हि किं प्रधानं जगत्कारणत्वाद्ध्येयमभिप्रेतं, नेत्याह—अभिज्ञो यस्तम् । 'स ऐक्षत लोकान्नु सृजा इति । स इमाँल्लोकानसृजते'ति श्रुतेः, 'ईक्षतेर्नाशब्दमि'ति न्यायाच्च । तर्हि किं जीवो ध्येयः स्यात्, नेत्याह—स्वराट् स्वेनैव राजते यस्तम् । स्वतःसिद्धज्ञानमित्यर्थः । तर्हि किं ब्रह्मा ध्येयः 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीदि'ति श्रुतेः,

---

व्यतिरेकपदेन अर्थापत्तिर्मीता । तथाच सावयवत्वाद्यन्यथानुपपत्त्या च यज्जन्मादि सिद्ध्यति तद्यत इत्यर्थः । यतो निमित्तोपादानरूपात्परमेश्वरात् । भूतानि आकाशादीनि स्थूलशरीरान्तानि जायन्ते । जातानि सन्ति येन जीवन्ति पोषणपालनादिकं लभन्ते । प्रयन्ति नश्यन्ति सन्ति यदभिसंविशन्ति यस्मिंस्तादात्म्येन प्रविशन्ति तद्ब्रह्मेति श्रुत्यर्थः । आदिपदेन 'सच्च त्यच्चाभवत्' 'तदात्मानं स्वयमकुरुते' इत्यादिश्रुत्यन्तरसंग्रहः । ननु नेयं श्रुतिरीश्वरस्य जगदुपादानत्वादिपरा चेतनद्रव्योपादानत्वादर्शनात् । घटादिकार्यं हि मृदाद्यचेतनोपादानकं दृश्यते, तेन मोहजडदुःखात्मकजगतस्तत्सदृशं त्रिगुणं प्रधानमेव उपादानं युक्तम् । पुरुषसन्निधानमात्रेण प्रधानं स्वयमेव जगदाकारेण भवति न तत्र कर्तुरीश्वरस्यापेक्षा । तस्मात् यतः प्रधानात् भूतानि जायन्ते प्रधानमेवात्मानं जगदाकारेण कुरुते इत्येवं श्रुतिभिरपि प्रधानमेव जगत्कारणत्वेन प्रतिपाद्यत इति शङ्कते—तर्हीति । स जगत्कर्ता परमेश्वरो लोकान् नु निश्चितं सृजे सृष्टिं करवाणि इति ऐक्षत आलोचितवान् । ततः स इमाँल्लोकानसृजत सृष्टवान् इति श्रुत्यर्थः । जगत्कारणस्य ईक्षणश्रवणात्तस्य प्रधानस्येक्षणासंभवात् श्रुतिभिश्चेतनमेव जगत्कारणं प्रतिपाद्यते न प्रधानम् । जडमेव द्रव्योपादानं इत्यादिनियम आरम्भादिवादे दृष्टो नतु विवर्तवादे, रज्ज्वादौ सर्पादिभ्रमे जडत्ववादेरपि सर्पादिचेतनत्वोपादानत्वादिदर्शनात् न विलक्षणत्वादिदूषैः 'यथाऽक्षरतः पुरुषस्केशलोमानि तथाऽक्षरात्संभवतीह विश्वमि'त्यादिश्रुत्या च जगद्विलक्षणस्येश्वरस्योपादानत्वसंभवोऽपेक्षेति भावः । विस्तरोऽन्यत्र द्रष्टव्यः । न्यायः श्रुत्यर्थनिर्णायकं सूत्रसमुदायः, तत्र 'ईक्षतेर्नाशब्द'मिति शारीरकमीमांसायां आदितः पञ्चमाधिकरणे सिद्धान्तसूत्रम् । तस्यार्थः—न

नेत्याह—तेने इति । आदिकवये ब्रह्मणेऽपि ब्रह्म वेदं यः तेने प्रकाशितवान् । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' इति श्रुतेः । ननु ब्रह्मणोऽन्यतो वेदाध्ययनमप्रसिद्धम् । सत्यम् । तत्तु हृदा मनसैव तेने विस्तृतवान् । अनेन बुद्धिवृत्तिप्रवर्तकत्वेन गाय-

---

सांख्याभिमतं प्रधानं जगत्कारणमिति प्रतिज्ञा । तत्र अशब्दमिति हेतुगर्भं विशेषणं, अशब्दत्वात् । वेदशब्दाप्रतिपाद्यत्वादित्यर्थः । कुतो वेदशब्दाप्रतिपाद्यत्वमिति शङ्कायामाह—ईक्षतेरिति । 'स ईक्षते' इत्यादिश्रुतिषु जगत्कारणस्येक्षणश्रवणादीक्षणं च जडे प्रधाने न संभवतीति वेदशब्दाप्रतिपाद्यमतो न कारणमिति न्यायोक्तिः । ईक्षणश्रुतिरपि कथंचित्प्रधाने योज्येतेत्यादिशङ्कानिकरनिरासाय । नन्वीश्वरस्य कर्तृत्वादिके वैषम्यादिदोषाप्रसङ्गार्थं जीवकर्मापेक्षं वाच्यम् । जीवश्च धर्मादिकर्मणां कर्तोपादानश्चेति कर्मद्वारेश्वरस्य सृष्ट्यादिप्रयोजकत्वेन जगदुभयविधकारणत्वं पर्यवस्यति । लोके जयकर्तृयोधप्रयोजके जेतृव्यवहारदर्शनात्, तथाच जीवो ध्येयः स्यादिति शङ्कते—तर्हि जीव इति । समाधत्ते—नेत्याहेत्यादि । अविद्यावृतज्ञानैश्वर्यस्य जीवस्य ध्याने फलाभावात् नित्यस्वप्रकाशज्ञानादिरूपं धीमहीति भावः । ननु समष्टिजीवस्य हिरण्यगर्भस्यानावृतज्ञानैश्वर्यश्रुतेः स ध्येयोऽस्त्विति शङ्कते—तर्हि किमिति । अग्रे व्यष्टिजीवोपाधिकभौतिकसृष्टेः पूर्वं हिरण्यगर्भः समुत्पन्नः । जातः सन् भूतस्य जीवादिसंघस्यैकः पतिरासीदित्यादिश्रुत्यर्थः । अनैश्वर्यस्यान्यतः प्राप्त्यश्रवणात् तज्ज्ञानस्य ज्ञानस्यापि तथा भगवतेरनावृतत्वमिति भावः । आदिकवये ब्रह्मण इति । तत्र नानाविधस्तोत्रगुणस्य वेदं प्रकाशितवानिति व्यञ्जयितुं कविपदम् । तत्स्तोत्राणां निर्दोषत्वाय आदीति । य इति । यः परमेश्वरः पूर्वं महाकल्पादौ ब्रह्माणं विदधाति उत्पादयति । देवं निजकल्पादौ च सुप्तं प्रबोधयति । यश्च तस्मै ब्रह्मणे वेदान्प्रहिणोति ददाति, तद्बुद्धौ प्रकाशयतीत्यर्थः । उभयत्र भूतार्थे लट् । तं देवं स्वप्रकाशं आत्माकारबुद्धौ प्रकाशत इति आत्मबुद्धिप्रकाशम् । तत्त्वमस्यादिवाक्योत्थधीवृत्तिव्याप्यमित्यर्थः । यद्वा आत्मज्ञानप्रदं ह प्रसिद्धं मुमुक्षुरहं शरणं प्रपद्ये तदेकशरणो भवामि वै निश्चितमित्यर्थः । अनेन परापरविद्याप्रदत्वम् । मनसैवेति । मनस्येव प्रकाशितवान् । छान्दसो

न्यर्थो दर्शितः । वक्ष्यति हि—'प्रचोदिता येन पुरा सरस्वती वितन्वताऽजस्य सतीं स्मृतिं हृदि । स्वलक्षणा प्रादुरभूत्किलास्यतः स मे ऋषीणामृषभः प्रसीदतामि'ति । ननु ब्रह्मा स्वयमेव सुप्तप्रतिबुद्धन्यायेन वेदमुपलभतां, नेत्याह—यद्यस्मिन्ब्रह्मणि सूरयोऽपि मुह्यन्तीति । तस्मात् ब्रह्मणोऽपि पराधीनज्ञानत्वात्स्वतःसिद्धज्ञान-परमेश्वर एव जगत्कारणम् । अतएव सत्यः, असतः सत्तामदत्त्वाच्च परमार्थसत्यः, सर्वज्ञत्वेन च निरस्तकुहकत्वम् । धीमहीति गायत्र्या प्रारम्भेण च गायत्र्याख्यब्रह्मविद्यारूपमेतत्पुराणमिति दर्शितम् ।

---

तृतीया । मनसि यथा वेदस्फूर्तिः स्यात्तथा मनोवृत्तिं प्रवर्तयामासेत्यर्थः । गायत्र्यर्थस्तु तृतीयपादार्थः । अतएव तृतीयपादस्यास्य च इत्यस्यात्र वाक्ये प्रयोगः । ब्रह्मणो हृदि प्रथमं प्रकाशितो वेदस्तन्मुखतः प्रादुर्भूत इत्यर्थं स्पष्टयितुं द्वितीयस्कन्धस्थश्लोकमाह—प्रचोदितेति । पुरा कल्पादौ अजस्य ब्रह्मणो हृदि सतीं सृष्टिविषयां स्मृतिं वितन्वता विस्तारयता येन भगवता प्रेरिता वेदवाणी तस्यास्यतो मुखतः किल प्रादुर्भूता । स्वानि शिक्षादियुक्तानि लक्षणानि यस्याः सा । ऋषीणां ज्ञानप्रदानां श्रेष्ठ इति तदर्थः । न्यायेनेति । लोकेष्वतिप्रसिद्धोऽयं इह न्यायपदाभिधः । यथा पूर्वेद्युराचार्याद्वेदमधीत्य सुप्त्वा परेद्युः प्रबुद्धः गुरुनिरपेक्ष एव वेदं पठति तद्वद्दैनंदिनकल्पेषु । महाकल्पादौ तु जातिस्मरवददृष्टविशेषात्कल्पान्तरानुष्ठितधर्मोपासनबललब्धब्रह्माधिकारः कल्पान्तरस्थवेदं स्मरन्नित्यर्थः । सूरयोऽधिकारिणो ब्रह्मादयोऽपि मुह्यन्तीति । पूर्वोक्तस्मृतिपुराणबलाद्ब्रह्मणः कल्पादौ वेदादिविषये मोहो निर्धार्यते, तेन सुप्तप्रतिबुद्धन्यायस्य जातिस्मरन्यायस्य च बाध इत्यर्थः । पूर्वपक्षोक्तहिरण्यगर्भश्रुतौ तु मुख्यन्तरोक्ता परमेश्वराज्ञानादिप्राप्तिरत्रार्थकर्तव्येति भावः । उपश्लोकार्थं निगमयति—अतएवेत्यादिना । अतएव परमार्थसत्य इति । गायत्र्या प्रारम्भेणेति । सार्धगायत्रीमन्त्राभिधायिधीमहीतिपदस्य घटितगायत्र्यर्थेन प्रारम्भेनेत्यर्थः । यस्यमात्तत्प्रणवाद्येतत्पीत्यत्रैव गायत्रीपदार्थो बोधः । वेदप्रतिद्वन्द्वानिर्णयत्वात्सरत्याहारान्यथा प्रारम्भ इति स्पष्टं 'गायत्र्या च समारम्भ' इत्यादेर्न युक्तः ।

यथोक्तं मत्स्यपुराणे पुराणदानप्रस्तावे—'यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः । वृत्रासुरवधोपेतं तद्भागवतमिष्यते ॥ लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् । प्रौष्ठपद्यां पौर्णमास्यां स याति परमं पदम् ॥ अष्टादशसहस्राणि पुराणं तत्प्रकीर्तितम्' इति । पुराणान्तरे

---

चतुर्लक्षपुराणमध्ये सपादलक्षभारते चाष्टादशस्मृतिषु च चतुर्वेदैकगोचरताहशानि-यतच्छन्दोविशेषस्य क्वाप्यदर्शनेन एकस्मिन्नेव पुराणे तत्संभवत्वापादनस्यात्यन्तासंभवोचितत्वात् ।

**गायत्र्यर्थता चास्य श्लोकस्येत्थम्**—सवितृपदं जगत्प्रसवकारणपरं तदर्थो जन्माद्यस्य इत्यनेनोच्यते । पालनादिक्रीडार्थकदेवपदार्थोऽप्यनेनैव जन्मादीत्यादिपदेन पालनादिग्रहणात् वरेण्यपदार्थः । परपदेन परत्वोपपादकानि सत्यादिपदानि । भर्गपदार्थो धामपदेन । धीमहिपदं स्वरूपेणैव तृतीयपादार्थः । तेने ब्रह्म हृदेत्यादिना समष्टिहिरण्यगर्भबुद्धिप्रेरकत्वोक्तौ सर्वव्यष्टिबुद्धिप्रेरकत्वस्यार्थो हुत्त्विसिद्धेरिति गायत्रीमन्त्रेण गायत्रीपदेन वा आख्यायते या ब्रह्मविद्या सा इष्यते प्रतिपाद्यते येनेति तद्रूपं प्रतिपाद्यप्रतिपादकयोरभेदविवक्षया विद्यात्मकमेव वा श्रीमद्भागवतमित्यर्थः । अत्र ब्रह्मविद्यापदेन सगुणनिर्गुणविद्ययोर्ग्रहणम् । गायत्रीमन्त्रेण हि शक्तिवृत्त्या सगुणब्रह्मणो लक्षणया निर्गुणस्य च प्रतिपादनेन तदुभयार्थकस्यास्य तदुभयार्थकत्वात् श्रीभागवतस्य गायत्र्या प्रारम्भः । तत्प्रभृतीनि चास्य पुराणस्य लक्षणानीत्यत्र पुराणवाक्यानि प्रमाणयति—यथोक्तमित्यादिना । गायत्र्यर्थमधिकृत्यारभ्य धर्मस्य 'धर्मः प्रोज्झितकैतव' इत्युपलक्षणभागवतधर्मादेर्विस्तरो वृत्रासुरवधश्च वर्ण्यते यत्र तदष्टादशसाहस्रं पुराणं भागवतमिति मात्स्यार्थः । पुराणान्तरे वामनपुराणे । हयग्रीवब्रह्मविद्येति । हयग्रीवेणाश्वशिरोयुक्तेन दधीचिमुनिना प्रवर्तिता नारायणवर्मारूपा ब्रह्मविद्या वृत्रवधादयश्चादिना ग्राह्येति संदर्भिण्याम् । ननु लक्षणमनुक्त्वैव दानश्रवणादिविधानं युक्तम् । भगवता प्रोक्तं भागवतं, भगवत इदं प्रतिपादकं भागवतं इति समाख्ययैव भागवतपदार्थज्ञानसंभवादित्याशङ्कायामाह—अत एवेति । लक्षणोक्तिपूर्वकं दानश्रवणादिविधानादेवेत्यर्थः । अयं भावः—लक्षणोक्ति...

च—'ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसंमितः । हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा ॥ गायत्र्या च समारम्भस्तद्वै भागवतं विदुः' । पद्मपुराणे अम्बरीषं प्रति गौतमोक्तिः—'अम्बरीष शुकप्रोक्तं नित्यं भागवतं शृणु । पठस्व स्वमुखेनापि यदीच्छसि भवक्षयमि'ति । अतएव भागवतं नामान्यदित्यपि न शङ्कनीयम् ॥ १ ॥

इति श्रीमद्भागवतप्रथमश्लोकस्य जन्माद्यस्येत्यस्य
श्रीधरीव्याख्या ॥

---

दानादिविधाने 'एवं चकार भगवान्व्यासः कृपणवत्सल.' इत्युक्त्वा भगवद्व्यासप्रणीतत्वेन पुराणमात्रस्य भागवतत्वसंभवात्, श्रीविष्णुशिवयोर्द्वयोरपि भगवत्त्वेन तत्प्रतिपादकविष्णुशिवपुराणादेरपि भागवतत्वसंभवाच्च न सामञ्जस्येन पदार्थनिर्णयः । तथाच भागवतं नामान्यच्छिवविष्णुपुराणादिकमेव स्यादित्यतिव्याप्तिशङ्का स्यात्, लक्षणोक्तौ तु यथोक्तलक्षणलक्षितं श्रीशुकपरीक्षित्संवादरूपं द्वादशस्कन्धात्मकं श्रीभागवतमिति विशेषनिर्णयेन न शङ्कनीयं शङ्कितुं योग्यं न भवति, एवंच लक्षणोक्तेरतिव्याप्त्यादिनिरासार्थायाः सत्त्वादित्यपि न शङ्कनीयं, ब्रह्मविद्यारूपत्वोक्त्या धर्मनिर्णायकमुमुक्षुभिरध्येयमित्यपि न शङ्कनीयमिति बोध्यते, आलयमित्यादौ शुकादिभ्योऽन्यतमस्य वक्ष्यमाणत्वादेवेति सद्भिर्विभावनीयम् ।

सहस्रसंख्या १६१९५ संपद्यते । उवाचमन्त्राः सप्तत्र्यधिकद्वादशशतसंख्याकाः १२७० अर्धश्लोकाः शतद्वयसंख्याः २०० इति श्रीमद्भागवते अमुकस्कन्धे प्रथमादिरध्याय इति वाक्यानामपि श्रीमद्व्यासविरचितत्वेन ग्रन्थसंख्यान्तर्गतत्वेन तत्संख्या पञ्चत्रिंशदुत्तरत्रिशती ३३५ सङ्कलनया अष्टादशसाहस्रसंख्या १८०००-संपत्तिः । यद्वा चण्डीसप्तशतीन्यायेन मन्त्रविभागेनापि इयं संख्या संभाव्यते । तथाहि—अनुष्टुप्श्लोकगद्यार्धरूपमन्त्राः एकादशसहस्राणि द्विसप्तत्युत्तरद्विशती च ११२७२ दीर्घवृत्तश्लोकानां षट्पञ्चाशदधिकसप्तविंशतिशतसंख्याकानामर्धकानि मन्त्राः द्वादशाधिकसार्धपञ्चसहस्राणि ५५१२ अनुष्टुबर्धकानि एकादशाधिकद्विशती २११ उवाचमन्त्राणां सप्तत्र्यधिकद्वादशशतसंख्यानां मध्ये पञ्चषष्ट्युत्तरद्विशतानामनुवादरूपाणां पुरोवादशेषतया तावतो विहायावशिष्टा उवाचमन्त्राः पञ्चोत्तरसहस्रं १००५ सङ्कलनयाष्टादशसहस्राणि १८००० आपाततः एव व्याख्या । तेन तत्तदध्यायेषु तत्तन्मन्त्रगणनया संख्योनाधिक्यसङ्कलनमूह्यम् । हेमाद्रिप्रभृतिधर्मशास्त्रग्रन्थेषु कालखण्डादौ 'कलिं सभाजयन्त्यार्या' इत्यादिश्रीभागवतवचनोदाहरणेन कलिधर्मादिनिर्णयारकर्मकाण्डार्थोऽप्यनेनेति काण्डत्रयरूपत्वेन सकलवेदादिसाररूपत्वं, 'सर्ववेदेतिहासानां सारं सारं समुद्धृत'मिति वक्ष्यमाणत्वाच्च । किंच मुमुक्षूपकाराय हेमाद्रिप्रेरितेन बोपदेवेन कृते मुक्ताफलग्रन्थे पुराणान्तरं विहाय श्रीभागवतश्लोकानामेवोदाहरणात् श्रीभागवतस्यैव मोक्षैकफलकत्वेन मुमुक्षुभिरवश्यं सेव्यत्वं व्यज्यते । तथाच ग्रन्थान्ते तत्पद्य— विद्वद्धनेशशिष्येण भिषक्केशवसूनुना । हेमाद्रिर्बोपदेवेन मुक्ताफलमचीकरत्' इति । अतएव स्कान्दोदाहृते— 'अम्बरीष शुकप्रोक्तं नित्यं भागवतं शृणु' इति वाक्ये 'यदीच्छसि भवक्षय'मित्युक्तम् । अत्र शुकप्रोक्त'मिति विशेषणेन विष्णुपुराणादीनां योगवृत्त्या भागवतत्वनिरासः । किंच योगवृत्त्या पुराणान्तरस्यापि भागवतत्वे हेमाद्रिमाधवादिभिमधुसूदनस्वामिकमलाकरभट्टान्तदेवपर्यन्तैर्महानिबन्धकारैर्निर्देशपदं भागवतपदमुच्चार्यैतस्यैव पुराणस्य वचांसि नोदाह्रियेरन् किंत्वन्यभागवतव्यावर्तकं विशेषणमुपादीयेत, भागवत इत्युक्त्वा अन्यपुराणवाक्यमप्युदाह्रियेत । नचैव क्वापि

पलभ्यते तस्मादिदमेव भागवतं न विष्णुपुराणादि । यत्तु शारीरकमीमांसायां भागवतमतनिरसनं तद्धयग्रीवपञ्चरात्रेण गणिततन्त्रभागवताख्यतन्त्रमेतस्यैवेति तत्रैव स्पष्टम् । वासनाभाष्यसंबन्धोक्ति-विद्वत्कामधेनु-हनुमद्भाष्यतत्त्व-भावार्थदीपिका-परमहंसप्रिया-शुकहार्दमनोहरा तोषणी-संदर्भिण्यादयष्टीकाग्रन्थाः चित्सुखाचार्य-गौडाचार्य-वल्लभाचार्य-विजयध्वजाचार्यादिभिः कृता बहुतरा विराजन्ते तथापि श्रीधरस्वामिकृतटीकाया एव भगवत्प्रियतमत्वेन सर्वसंमतत्वात्सर्वदेशे प्रसिद्धत्वाच्च तामेव व्याख्यातुमुद्यतामहे ॥

इदं पद्य सगुणब्रह्मव्याख्यासदर्थार्थं पुनरत्र सगृहीतम्—

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १ ॥

---

**एवं निराकारब्रह्मपरतया व्याख्यात पद्यं साकारश्रीकृष्णपरब्रह्मतयापि व्याख्यायते—**

कृष्णलीलाया अत्र प्राधान्येन प्रतिपादनात्, ग्रन्थप्रतिपाद्यस्य च ग्रन्थादौ पद्ये वर्णनावश्यकत्वात् । तत्र पर पूर्णावतारतयांशावतारेभ्य उत्कृष्ट श्रीकृष्ण धीमहीत्यन्वय । अस्य स्वरूपलक्षणमाह—**धाम्ना स्वेनेति** । आत्मीयेन मधुराख्येन धाम्ना स्थानेन तन्निवासिना सदा निरस्त कुहक मायाकार्यं ससारलक्षण येन तम् । लीलामाह—**जन्माद्यस्येति** । आद्यस्य जन्मादिविकाररहितस्यापि जन्म अवतार यत यत्र वसुदेवगृहे । सप्तम्यर्थे तसिल् । तस्मात् । इतरतश्च इतरत्र नन्दगृहेऽपि योऽन्वयात् अन्वगच्छदिति परेणैव य इति पदेनान्वय । कस्माद्धेतोरन्वगात्तमाह–अर्थेषु कसवञ्चनादिप्रयोजनेषु अभिज्ञ इति । यद्वा बाललीलारासलीलादिकोत्तरविलासरूपेष्वर्थेषु अभिज्ञस्वात्तदर्थसंपादननिपुण इत्यर्थ । तत स्वराट् स्वैर्गोकुलवासिगोपालादिभिरेव राजत इति गोपलीलस्याप्यव्याहतैश्वर्यमाह—**तेने इति** । यो ब्रह्मणे ब्रह्माणं विस्मापयितु हृदा सकल्पमात्रेण ब्रह्म सत्यज्ञानानन्तानन्दमात्रैकरसमूर्तिमय वत्सवत्सपालादिरूप वैभव विस्तारितवान् । यत् यत्र सूरयो बलरामचतुर्मुखादयो मुह्यन्ति तत्त्व ज्ञातु न शक्नुवन्ति । यद्वा यल्लौकिकालौकिकतादृशलीलाभि सूरयो लीलातत्त्वज्ञा भक्ता मुह्यन्ति प्रेमातिशयोदयेन विवशा भवन्ति । यदित्युत्तरत्राप्यन्वेष्यति । यत् याभ्यो लीलाभ्यस्तेजोवारिमृदां यथा यथावत् विनिमयो भवति तन्मुखादिकान्त्या चन्द्रादेर्निस्तेजस्त्व तन्निकटवस्तूनां तत्तेजसा चन्द्राधिकतेजोवत्त्व, वेणुवादनादिलीलया वारिण कठिनत्व,

मृदः पाषाणादेर्देवत्वं इति । यत्र श्रीकृष्णे निमित्ते सति निसर्गे त्रिषु गोकुलमथुराद्वारवतिपुरेषु सर्गे. गोपालराधिकादेरक्रूरोद्धवादे रुक्मिण्यादेश्च प्रादुर्भावः अमृषा सत्यः तेषां गोलोकवैकुण्ठादिवासित्वेन तद्विग्रहाणां भगवदवतारतुल्यत्वादिति ॥१॥

इति श्रीमद्भागवतप्रथमश्लोकस्य श्रीधरीयटीकायाः
काशीनाथोपाध्यायकृता व्याख्या समाप्ता ॥

